॥ श्रीः ॥

# BHASHYABHANUPRABHA

(a Commentary oa Brahmasutra Bhashya of
Sri Sankara Bhagavatpada)

BY

Bhatta Trymbaka Sastriar

OF

Mysore

EDITED AND PUBLISHED BY

Panditaraja S. Subrahmanyasastri

FOR

Advaita Sabha

Kumbakonam

1962





Price Rupees Two

# BHASHYABHANUPRABHA



(a Commentary on Brahmasutra Bhashya of
Sri Sankara Bhagavatpada)

BY

Bhatta Trymbaka Sastriar

OF

Panditaraja S. Subrahmanyasastri

FOR

**Advaita Sabha**

Kumbakonam

1962





Price Rupees Two

॥ श्रीः ॥

# भाष्यभानुप्रभा

## (ब्रह्मसूत्रभाष्यव्याख्या)

भट्टत्र्यम्बकशास्त्रिविरचिता

आनन्दमयाधिकरणान्ता

पण्डितराज पण्डितप्रवरादि बिरुदभाजा
S. सुब्रह्मण्यशास्त्रिणा
संशोध्य प्रकाशं नीता

अद्वैतसभा

कुम्भघोणम्



प्लवसंवत्सरः

मूल्यं रूप्यद्वयम्

# INTRODUCTION

Bhashyabhanuprabha is a very rare and valuable commentary on Brahmasutrabhashya of Sri Sankara Bhagavatpada, by Sri Tryambaka Sastriar. Sri Sastriar was a court pandit in the palace of H. H. Sri Krishnaraja Udayar who reigned over Mysore in the early years of the nineteenth century. He was a very eminent scholar of his time in all the Sastras with special taste and regard for Nyaya and Vedanta. Several thrilling stories are said about his greatness. One of them is about his learning Vedanta. It is said that as a genius in Nyaya he wandered about in search of a teacher who would initiate him in his Vedantic studies for which he had a sincere appetite. But he could not find any pandit who could come forward to teach him and answer all his questions and clear his doubts. When he was about to give up his efforts, he saw a very learned Sanyasin in a small forest, prostrated before him and requested him to teach him the Brhma Sutra Bhashya of Sri Bhagavatpada. The request was granted and the Sastrin began to hear the discourses from the great hermit everyday with great enthusiasm, since they were of a high standard and upto his mark. Nodody knew who the Sanyasin was, where he lived, and where he took his *bhiksha*. But he used to appear in a particular spot each morning, and disappear when the class was over. Sri Sastriar was under impression that it was Sri Bhagavatpada himself who came down again in compassion for him. Sri Sastriar salutes only Sri Vyasa and Bhagavatpada, never mentioning any other preceptor, the mention of whom is customary with all Vedanta authors. In the colophon of Srutimatodyota a work of Sri Sastrin it is said "Thus ends Srutimatodyota one of the works of Bhatta Tryambaka who obtained initiation in Brhma Vidya through the blessings of Sri Sankara Bhagavatpada and who defeated hosts of Dvaitins by hundreds of reasonings which gushed forth in his mind through his studies of the *Chandrikas* of Brhmananda. Tradition says that in all the Dvaita-Advaita debating sabhas he used to shine like a moon among the stars. He wrote several works in Vedanta of which only a few are available now. The present work is an answer to all the objections raised upon Advaita in Nyaya Sudha and Chandrika, the very important works in Dvaita literature. The work is very impor-

tant for those who wish to understand the Advaidic standpoint correctly. The work is available only upto the end of Anandamayadhikarana.

We are laid under deep obligations to H. H. Sri Sankaracharya of Kamakotipeetam under whose benign and inspiring guidance the publication of such rare works is possible in *Brhmavidya* by the Advita Sabha.

S. S. Sastri.

---

ॐ

# श्रीभाष्यभानुप्रभा

## श्रीत्र्यम्बकभट्टाचार्यविरचिता

यद्वेदान्तपयोनिधावमृतमित्याहुर्गिरामप्यसौ
दूरे यन्महिमा जनुः प्रभृतयो दोषा न यत्रासते ।
जन्मादिर्जगतो यतो नतिरियं तस्मै सुखांबोधये
सर्वस्मै सकलागमाशयविदां स्वस्मै परस्मै सते ॥

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशङ्कररूपाय श्रीपरब्रह्मणे नमः ॥

भास्वद्भाष्यमयूखमालिनि भिदापाण्डित्यसाहंकृति-
ध्वान्तध्वंसविधायिनि श्रुतिशिरःकंजातनिद्राभिदि ।
जाग्रत्यद्वयशासनासहजडध्वान्तोक्तिमात्रेण यो
मन्दानामजनि भ्रमस्तमधुना भङ्क्तुं श्रमोऽयं मम ॥

युष्मदस्मत्प्रत्ययगोचरयोरित्याद्यं श्रीमद्भाष्यं अस्यानर्थहेतोःप्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते इत्यन्तं अस्य शास्त्रस्य प्रेक्षावत्प्रवृत्त्यङ्गभूतविषयप्रयोजनादिप्रदर्शनपरम् । तत्र यद्यपि विषयप्रयोजनादिप्रतिपत्तिमन्तरा प्रवृत्त्ययोगात् तदुपदर्शनस्यावश्यकत्वेपि आत्मानात्मनोः परस्पराध्यासवर्णनमनुपयुक्तं ; एवमाद्यसूत्रभाष्येपि विषयप्रयोजनयोः सुज्ञेयतया तदुपदर्शनमपि नार्थवत् । अपि च आद्यसूत्रसूचितार्थासंस्पर्शितया तस्य तद्भाष्यत्वमपि अनुपपन्नमिति प्रतिभाति, तथापि प्रतिपत्तिसौकर्याय एतत्सूत्रसूचितस्यात्मैकत्वरूपविषयस्य तज्ज्ञानात् कर्तृत्वादिबन्धात्यन्तोपरमरूपप्रयोजनस्य चासंभावनानिवृत्तये आरंभणाधिकरणादिसिद्धस्य कर्तृत्वादिबन्धमिथ्यात्वस्यात्र भाष्ये प्रतिपादनमविरुद्धम् । यथा च बन्धमिथ्यात्वमाद्यसूत्रसूचितं तथा वक्ष्यते । तत्र व्याचिख्यासितस्य शारीरकब्रह्ममीमांसाशास्त्रस्यान्यतो विषयप्रयोजनादिनिर्णयायेदमादिमं सूत्रं—अथातो ब्रह्मजिज्ञासेति । अत्र च समन्वयादिविचारारंभोपयोगिविषयादिव्यवस्थापकत्वेन तदपोद्घातत्वाच्छास्त्रादौ निवेशः । शास्त्रेऽन्तर्भावश्च । समन्वयादौ तु नास्यान्तर्भावः तदेतच्छास्त्रान्तर्भूतं सूत्रमिति पञ्चपादिकायां शास्त्रान्तर्भावमात्रोक्तेः ।

यच्च तत्र विवरणं "स्वार्थे समन्वयद्वारेण विचार्यमाणवेदान्तवाक्यानामपि ब्रह्मणि समन्वयनिमित्तत्वात् समन्वये च संबन्ध" इति तच्छास्त्रान्तर्भावविरोधात् प्रथममेव तन्निवेशः किंनिबन्धन इति शङ्काव्युदासनेनाविरोधात् आदाविव समन्वयारंभेपि तस्य निमित्तत्वस्य अविशेषात् तदादौ निवेश इति ज्ञापनाय । न त्वन्तर्भावविवक्षया । तथा सति शास्त्रान्तर्भूतमिति पञ्चपादिकायामिव तदवतरणे शास्त्रान्तर्भूतत्व इति विवरण इव चान्तर्भाव इत्यनुक्त्वा संबन्ध इति

समन्वयाविरोधादिनिवेशसाधारणसंबन्धपदोपादानानुपपत्तेः। प्रथमसूत्रस्य समन्वयाद्यशेषविचारहेतुत्वाच्छास्त्रप्रथमाध्यायपादसंगतय इति कल्पतरूक्तिरप्युक्तरीत्या नान्तर्भावलक्षणसंगतिपरा। श्रुतिसंगतिरप्यस्य तन्मूलत्वरूपा धर्मजिज्ञासासूत्रवत्। तदुक्तं कल्पतरौ—वेदान्तैरध्ययनविधिना सामान्यतः प्रयोजनवदर्थावबोधपरतां नीतैः विशेषतश्च सन्दिह्यमानार्थतया विचाराकाङ्क्षैः आक्षेपादस्याधिकरणस्य श्रुतिसंगतिरिति। विवरणेऽप्युक्तं—आपातप्रतिपन्नोत्तरविचारविधिरेव स्वापेक्षितविचाराय प्रथमसूत्रमारंभयति विधौ च विचारिते विधिविषयविचारसूत्राणि पश्चादारंभयतीति।

तत्र तावद्विषयादिसंभवासंभवाभ्यामिदं शास्त्रमारंभणीयं नवेति संशयः। तत्र नारंभणीयं एतच्छास्त्राधीनस्य विचारस्याकर्तव्यत्वात्। तदकर्तव्यत्वं च विषयाद्यभावात्। न चास्य ब्रह्म विषयः बृहत्वात् ब्रह्मणत्वाच्च प्रत्यगात्मन एव ब्रह्मतया तस्य च अहमित्यपरोक्षानुभवगोचरत्वेन असंदिग्धत्वात्। न चात्र नात्मतत्वं प्रकाशते, तस्याहं मनुष्यः काणः करोमीति देहेन्द्रियादितादात्म्यापन्नात्मविषयकत्वादिति वाच्यम्। अहं मनुष्य इत्यादिप्रत्ययानां देहाद्यभेदावगाहित्वासिद्धेः। योहं बाल्ये पितरावन्वभूवं स एवैतर्हि प्रणप्तॄननुभवामीत्यनुभवेन देहद्वयाननुगतदशाद्वयानुगमस्य देहद्वयाद्व्यावर्तकस्यात्मनि गृह्यमाणतया देहात्मनोर्विवेकावधारणात् मम देहो मम चक्षुः मम श्रोत्रं मम मन इति भेदव्याप्तसंबन्धानुभवाच्च चक्षुरादीनां करणानां कर्तृत्वावगाहिप्रत्ययगोचरत्वाच्च। अहं मनुष्य इत्यादिव्यवहाराश्च मञ्चाः क्रोशन्ति इतिवत् औपचारिका एव। न चैवमपि कर्तृत्वाद्युपप्लवरहितमात्मतत्वं शास्त्रस्य विषयः संभवतीति वाच्यम्। प्रत्यक्षविरोधेन आगमस्यात्मनि कर्तृत्वाद्यभावबोधकत्वायोगात्। निर्दोषस्यागमस्यार्थान्तरे प्रामाण्यसंभवात्। विस्तरस्तु निबन्धादौ द्रष्टव्यः।

एवं प्रयोजनाभावादपि शास्त्रमनारंभणीयं अपरोक्षतयाऽनुभूयमानेप्यात्मतत्वेऽनुभूयमानस्य कर्तृत्वादिबन्धस्य शास्त्राधीनतज्ज्ञानमात्रेण निवृत्तेः प्रत्याशाया अयुक्तत्वात्। अत एव नाधिकारसंभवः; प्रयोजनापेक्षायाः संभवेपि मोक्षस्य प्रकृतविचारासाध्यतानिर्णयेन तस्याः तदधिकारत्वायोगात्। न च सेतुदर्शनादेरिव विहितक्रियात्वेन आत्मदर्शनस्यापि अपवर्गसाधनत्वं संभवतीति वाच्यम्। एवं सति पूर्वतन्त्रेणैवास्य चरितार्थतया शास्त्रारंभवैयर्थ्यस्य वज्रलेपायितत्वात्। तावतापि सिद्धान्त्यभिमतविचारारंभासिद्धेश्च। अत एव नित्यत्वादिना सन्दिग्धत्वादात्मनो विषयत्वं संभवतीति निरस्तम्। अद्वैतिमते प्रत्यगभिन्नब्रह्मापरोक्षमात्रस्य मोक्षसाधनतया तस्य च विचारात्प्रागेव सिद्धत्वेन तदर्थस्य विचारान्तरस्याकर्तव्यत्वात्। यद्यपि स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्य वेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थावबोधपरत्वमापादितम् यद्यपि च "अविशिष्टस्तु वाक्यार्थः" इति न्यायान्मन्त्राणामिव वेदान्तानामप्यर्थपरत्वमौत्सर्गिकम्। तथापि प्रबलप्रत्यक्षविरोधेन स्वार्थात् प्रच्युतानां तेषामुपचरितार्थत्वमविवक्षितार्थत्वं वा। तथात्वेऽपि हुंफडादिवज्जपमात्रोपयोगित्वमप्रत्यूहम् इति प्राप्ते—

समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसाद्वितीयात्मतत्त्वस्य प्रत्यक्षादिप्रमाणान्तरानधिगतस्य विषयत्वसंभवादिदं शास्त्रमारम्भणीयमेव । न चैतादृशमात्मतत्त्वमहंप्रत्ययगोचरः । तस्य देहादितादात्म्यापन्नात्मविषयत्वात् । **अथ** देहादितादात्म्यापन्नात्मविषयकस्यापि ज्ञानस्य केवलात्मविषयकत्वमावश्यकं विशेष्याविषयविशिष्टप्रत्ययायोगात् इति कथमहंप्रत्ययागोचरत्वं तत्त्वस्य । न चाहंप्रत्यये तद्भानेऽपि कर्तृत्वाद्यभाववत्तया तस्याभानात्तेन रूपेण तस्य विषयत्वं संभवतीति वाच्यम् । एवं सति विवक्षितविवेकेन श्रुतेः कर्तृत्वाद्यभावैकतात्पर्यापातात् । न चेष्टापत्तिः । तस्यात्मान्यत्वे सत्यत्वे चाद्वैतहानिः । मिथ्यात्वे च तस्य तत्त्वावेदकश्रुतितात्पर्यगोचरत्वायोगात् । न च कर्तृत्वाद्यभावस्यात्माभेदे आविद्यकभेदस्यापि तयोरुपगमादंशभेदेनाहंप्रत्ययगोचरत्वतदभावव्यवस्थोपपद्यत इति वाच्यम् । अधिष्ठानतत्वसाक्षात्कारस्याविद्याविरोधितया स्वप्रकाशाधिष्ठानचैतन्येऽपरोक्षतया भासमाने तत्राविद्यायाः तत्कल्पितभेदादेश्च वर्तमानत्वायोगात् । स्वप्रकाशस्याप्यविद्यावशादभाने अविद्यादेः दुःखादेश्चाप्रकाशप्रसङ्गादिति **चेन्मैवम्** ।

स्वरूपचितः केवलायाः कर्तृत्वाद्यध्यासप्रयोजकाज्ञानाविरोधित्वात् तदज्ञानसमानविषयकवृत्त्युपहितचैतन्यस्य तादृशवृत्तेर्वा तदज्ञाननाशकतया शुद्धचितः स्वप्रकाशत्वेऽपि तस्यास्तादृशाज्ञानसमानविषयकत्वतादृशवृत्त्युपहितत्वाद्यभावेनाज्ञाननाशकत्वायोगात् । **स्वप्रकाशता** च स्वसत्ताकोटिकसंशयविरोधिज्ञानरूपता । सा च कर्तृत्वादिभ्रमप्रयोजकाज्ञानसत्वेऽपि चिदस्ति न वेत्यादिसंशयस्य कदाप्यननुभवेनात्मन एव तद्विरोधितयोपपद्यते । अधिकमन्यत्रोपपादितम् । न च स्वरूपचितोऽज्ञानाद्यविरोधित्वे तद्वेद्ये दुःखादौ अज्ञानप्रसङ्ग इति वाच्यम् । दुःखाद्युपहितात्मनो दुःखानुभवरूपत्वेऽपि कर्तृत्वादिविभ्रमप्रयोजकाज्ञानाविरोधित्वेऽपि च प्रमाणाभावपराहतदुःखसमानाधिकरणतदावारकाज्ञानापादनस्य व्यधिकरणत्वात् । न चैवमपि घटः सन्नित्यादिप्रत्यये घटाद्युपहितचिद्भाने शुद्धचिद्भानस्यावश्यकतया तस्याविद्याविषयविषयकत्वाच्चाविद्याविरोधिता दुर्वारेति वाच्यम् । स्वनिरूपितविषयतानिरूपकत्वरूपस्य समानविषयकत्वस्यैव विरोधिताप्रयोजकत्वात् । अविद्याविषयतायाः शुद्धचिन्निष्ठाया अनवच्छिन्नतयोक्तप्रत्ययविषयतायाश्च घटाद्यवच्छिन्नतया तयोर्निरुक्तसमानविषयकत्वायोगात् । समानाकारज्ञानयोः तादृशज्ञानेच्छाद्वेषप्रयत्नसंस्कारादीनामिव च ज्ञानाज्ञानयोरपि तादृशयोः विषयताभेदो न प्रामाणिकः । न च शाब्दापरोक्षवादिनस्तव मते शब्दजन्यशुद्धब्रह्मज्ञानस्यापि साक्षात्काररूपतया तेन मूलाविद्यानिवृत्त्यापत्तिरिति वाच्यम् । निबन्धकारमते शाब्दापरोक्षानभ्युपगमात् । अभ्युपगमेऽपि वा तस्य नाज्ञाननिवर्तकता । अप्रामाण्यशङ्कानास्कन्दितबुद्धावेवाज्ञाननिवर्तकतावच्छेदकशक्तेरुपगमात् आपातप्रतिपत्तेश्चाप्रामाण्यशङ्कास्कन्दितत्वात् ।

अपि चोक्ताज्ञाननिवर्तकतावच्छेदिका शक्तिरसंभावनाविपरीतभावनाधीनदृढतरसंस्काररूपदोषसमवधानकालीने प्रत्यगभिन्नब्रह्मसाक्षात्कारे नाङ्गीक्रियते । तादृशशक्तिविशिष्टज्ञानं प्रति तादृशदोषयोः प्रतिबन्धकत्वात् । मनननिदिध्यासनाभ्यां तयोरपगमे च तादृशशक्तिमज्ज्ञानमुत्पद्यते

तदेव च मूलाज्ञाननिवर्तकम्। न चैतावता अज्ञानस्य सत्यतापत्तिः। ज्ञानमात्रनिवर्त्यत्वाभावादिति वाच्यम्। मननादीनां दोषनिरासद्वारा ज्ञानोत्पत्तावुपयोगित्वेऽपि ज्ञानेनाविद्यानिवृत्तौ अनपेक्षितत्वात्। भ्रमरध्यानं च न ज्ञानं, कृतिसाध्यत्वात् कृत्यसाध्यज्ञानमात्रनिवर्त्यत्वस्यैव वा अज्ञानात्मकत्वे प्रयोजकत्वोपगमाच्च। दृष्टं च षड्जमध्यमाद्यविवेकस्य गान्धर्वशास्त्राभ्यासाधीनषड्जादिप्रत्यक्षनिवर्त्यत्वम्। तदभ्यासश्च विजातीयप्रत्ययोत्पत्तावेव कारणम्। न तु तदविवेकनिवृत्तावपि मानाभावात्। उक्तं च पक्षधरमिश्रादिभिः सिद्धिनाशोत्तरमपि विना सिषाधयिषां क्षणचतुष्टयपर्यन्तमनुमित्यनुत्पादनिर्वाहाय सिद्धियोग्यतायास्तत्र विरोधित्वम्। एवं त्रिचतुरक्षणान्तरितायामपि सिषाधयिषायां सत्यामपि सिद्धौ अनुमितिनिर्वाहाय तद्योग्यताया उत्तेजकत्वं च यथा स्वीक्रियते तथा तुल्यन्यायेनानादिकालानुवृत्तासंभावनाविपरीतभावनाधीनाप्रामाण्यज्ञानस्येव तद्योग्यताया अपि अज्ञानविरोधितायामुत्तेजकत्वम्। इयांस्तु विशेषः—यन्न्यायमते उत्तेजकत्वं विरोधितावच्छेदकीभूतात्यन्ताभावप्रतियोगित्वम्। अस्मन्मते च विरोधितावच्छेदकशक्तिविघटकत्वमिति। अप्रामाण्यज्ञानयोग्यता च तज्जन्यो दृढतरसंस्कारः। सिद्ध्यादियोग्यता अन्यविधेति च।

अथैवं कथंचिदुपपत्तावपि नास्याः कल्पनायाःदृष्टानुसारिता यतो रजतभेदविशिष्टशुक्त्याद्यावरकाज्ञानेन रजताध्यासो दृष्टः। नतु केवलशुक्त्यावारकेण रजताविरोधिरूपान्तरावच्छिन्नतदावारकेण वा। एवं च शुद्धब्रह्मावारकाज्ञानस्य कथं जगद्विभ्रमहेतुत्वमुच्यते। न च द्वैतात्यन्ताभावादिविशिष्टब्रह्मावारकमज्ञानं द्वैतभ्रमहेतुरिति युक्तम्। तथासति तद्विशिष्टब्रह्मज्ञानस्यैव तन्निवर्तकताया वाच्यतया वेदान्तानां तादृशबोधपरत्वे प्रामाण्यापातात्। न च तादृशात्यन्ताभावोपलक्षितब्रह्मविषयकाज्ञानं द्वैतविभ्रमहेतुः नात उक्तदोष इति वाच्यम्। तथासति चिन्मात्रविषयकमेवाज्ञानमिति पर्यवसानेन दृष्टाननुसारितायाः दुर्वारतापत्तेरिति चेत् मैवम्। सोऽयं देवदत्त इत्यादिवाक्यानामिव वेदान्तानामपि व्यवस्थाकल्पनेन दृष्टाननुसारित्वाभावात्।

तथाहि—सोऽयमित्यादिवाक्यानां तावन्न तत्तेदंताविशिष्टाभेदपरता, विशिष्टातिरिक्ततामते तदयोगात्। अनतिरेकेऽपि एकधर्मविशिष्टे अपरधर्मविशिष्टवैशिष्ट्यावगाहिज्ञानस्य विशेष्यतावच्छेदकावच्छिन्नानुयोगिताकत्वादिविशिष्टसंबन्धावगाहितानियमात् विभिन्नकालीनैकधर्मविशिष्टे तादृशधर्मान्तरवैशिष्ट्यस्य बाधितत्वेनाप्रामाण्यापत्तेश्च। नच गन्धवान् गन्धप्रागभाववान् इत्यस्य विशिष्टवैशिष्ट्यावगाहिबोधपरवाक्यस्य प्रामाण्यं कस्याप्यनुमतम्। न च विशिष्टवैशिष्ट्यबाधे तद्धर्मोपलक्षितबोधपरत्वमेव तस्य वाच्यम्। अतो न दोष इति वाच्यम्। एवं सति तादृशवाक्यानामुपलक्षणाविषयकोपलक्षितबोधमात्रपरत्वोपपत्तौ उपलक्षणांशेऽपि तात्पर्यकल्पनाया अनुचितत्वात्। न चैवं सति शुद्धव्यक्तिमात्रपरत्वमापतितम्। न चैतद्युज्यते। एकैकपदमात्रेणापि तद्बोधोपपत्त्या पदान्तरवैयर्थ्यापत्तेः स्वरूपमात्रबोधस्य विरोध्यविषयकतया नायं स इत्यादिभ्रमविरोधित्वानुपपत्तेः। प्रष्टव्यस्वरूपमात्रस्य प्रागेव सिद्धतया प्रश्नाद्यनुपपत्तेश्चेति वाच्यम्। प्रष्टव्यस्य स्वरूपज्ञानस्य प्रागेव सिद्धत्वेऽपि संशयविरोधितद्विषयकज्ञानविशेषेच्छया प्रश्नोपपत्तेः। न च संशयाविरोधिज्ञानानतिरिक्तविषयकज्ञानस्य संशयविरोधित्वमेवानुपपन्नमिति वाच्यम्। आपातप्रतिपन्न-

तद्वाक्यार्थविषयकज्ञानस्याप्रामाण्यशङ्कास्कन्दितस्य संशयाद्यविरोधित्वेऽप्यप्रामाण्यशङ्कानास्कन्दितस्य तत्समानविषयकज्ञानान्तरस्य विरोधितादर्शनेन संशयादिविरोधितायां तत्प्राक्सिद्धज्ञानादिविषयकत्वस्यातन्त्रत्वात् ।

एवंच प्रकृते विशिष्टपदार्थद्वयाभेदानुपपत्तिधीद्वारकतादृशधर्मद्वयोपलक्षितव्यक्तिपरत्वविशिष्टतादृशवाक्यज्ञानाधीनाखण्डार्थबोधस्य पूर्वसिद्धसंशयविरोधितावच्छेदकशक्तिशून्यज्ञानसमानाकारस्यापि तद्विरोधिता निष्प्रत्यूहा । तदवच्छेदकशक्तिमत्त्वात् । तादृशशक्तिविशेषविशिष्टशाब्दबुद्धिं प्रति उक्तानुपपत्तिबुद्ध्यादिद्वारकतादृशधर्मद्वयोपलक्षितव्यक्तिपरत्वविशिष्टवाक्यज्ञानस्य कारणत्वाच तदुभयोपपत्तिः । विशेषणोत्पादकसामग्र्या अपि विशिष्टोत्पत्तावपेक्षिततया विरोधिविषयकदृढतरवासनाद्यसमवधानमपि तत्रापेक्ष्यत इत्यदोषः । तादृशशक्तयश्च परोक्षापरोक्षाध्यासादिनिवर्तकतावच्छेदिका नानाविधा एव । तथाच तथैव वेदान्तमहावाक्यनामपि व्यवस्थासंभवान्नादृष्टचरकल्पनापत्तिः ।

अथैवमपि उद्देश्यवाचकसमभिव्याहृतकिंशब्दस्य समभिव्याहृतपदप्रतिपाद्यतावच्छेदकव्याप्यधर्मावच्छिन्नविधेयतानिरूपिततदवच्छिन्नोद्देश्यताशालिज्ञानेच्छाविषयवाचकत्वमवश्यं वाच्यम् । अन्यथा का पृथिवीति प्रश्ने गुणवती पृथ्वीत्यादेरप्युत्तरत्वप्रसङ्गात् । एवं च कश्चन्द्रः किं ब्रह्मेत्यादिप्रश्नवाक्यस्थकिंशब्दानुरोधात् प्रकृष्टप्रकाशादिवाक्यानां सत्यादिवाक्यानां च विशिष्टबोधपरतैव वाच्येति क्वाखण्डार्थपरता लोकदृष्टेति चेन्न । त्वदुक्तरीत्युपगमेऽपि का पृथिवीति प्रश्ने पृथ्वीत्वव्याप्यधर्मवती पृथिवीत्युत्तरापत्तेस्तुल्यत्वात् । नचोद्देश्यतावच्छेदकव्याप्यत्वानवच्छिन्नतद्व्याप्यधर्मनिष्ठावच्छेदकताकविधेयताशालिज्ञानेच्छाविषयवाचकत्वमुक्तकिंशब्दस्य वाच्यम् । अतो न दोष इति वाच्यम् ॥ एवमप्यस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्ने चन्द्रपदवाच्यश्चन्द्र इत्यस्याप्युत्तरत्वापत्तेः । नचेष्टापत्तिः । चन्द्रे चन्द्रपदवाच्यतायाः प्रागेवावगतत्वात् तद्बोधनेऽपि जिज्ञासाया अनिवृत्त्या प्रश्नप्रयोजकजिज्ञासानिवर्तकबोधपरवाक्यस्यैवोत्तरताया वाच्यत्वात् । अन्यथा का पृथिवीत्यस्य गुणवती सतीति वाक्यमनुत्तरमित्यत्र नियामकाभावप्रसङ्गात् । ऐच्छिकव्यवस्थाया अतिप्रसञ्जकत्वात् । न चोद्देश्यवाचकचन्द्रपदस्य चन्द्रपदवाच्यपरत्वादुक्तवाक्यं पुनरुक्ततया अबोधकत्वेन नोत्तरमिति वाच्यम् । यथाश्रुतार्थकत्वेऽपि बाधकाभावात् दशरथादिपदवदजातचन्द्रसाक्षात्कारस्यापि चन्द्रादिपदाजातिविशेषपुरस्कारेण बोधसंभवात् । चन्द्रश्चन्द्रत्वजातिमानित्यादेरुत्तरत्वप्रसङ्गस्य तथाप्यपरिहाराच्च । यश्चन्द्रपदवाच्यः स चन्द्रत्वजातिमान् इति निश्चिन्वतामप्युक्तदर्शनेनोक्तरीत्या इष्टापत्त्ययोगाच्च । तस्मात् सामान्यतो जिज्ञासितमात्र एव किंपदस्य शक्तिः तथा प्रष्टः सिद्धासिद्धज्ञानविवेचनेन यादृशसंशयविरोधि ज्ञानमस्याप्राप्तं तादृशज्ञानजनकं वाक्यमुत्तरं वाच्यमित्येव सर्ववादिभिराश्रयणीयम् । तच्चास्माकमप्यविरुद्धम् । न च प्रष्टः चन्द्रे द्रव्यत्वादिनिश्चयो नास्ति इति निश्चयदशायामपि कश्चन्द्र इति प्रश्ने द्रव्यं प्रमेयः इत्यादि नोत्तरमिति तद्वारणायोक्तप्रकारादर आवश्यक इति-वाच्यम् । चन्द्रे द्रव्यत्वादिकं संदिहानेन तन्निवृत्तये कश्चन्द्र इति प्रश्ने द्रव्यमित्यादेरप्युत्तरत्वानपायात् तन्निश्चिन्वानस्य

प्रश्ने तु नेदमुत्तरम् । तत्प्रयोजकजिज्ञासानिवर्तकत्वाभावादिति न किं चिदनुपपन्नम् । किंपदस्याज्ञातवाचकत्वेऽप्ययमेव प्रकार उन्नेयः ।

एवं च यथा तत्तेदंतोपलक्षितविषयकाखण्डार्थबोधस्य प्राक्सिद्धज्ञानसमानविषयकत्वेऽपि शक्तिविशेषपुरस्कारेण तादृशार्थविषयकविलक्षणाज्ञाननिवर्तकत्वम् । एवं वेदान्तानामपीति नास्माकमदृष्टचरकल्पना ।

उक्ताज्ञानगतं वैलक्षण्यं चाज्ञानान्तराद्व्यावृत्तमिदंतोपलक्षिते तत्तोपलक्षितभेदविभ्रमजनकतावच्छेदकशक्तिविशेषरूपम्। युक्तं चाज्ञानविषयतायां तत्तेदंत्वादेरवच्छेदकत्वादिकल्पनमपेक्ष्याज्ञान एव शक्तिविशेषकल्पनम्। न चैवमपि शक्तिविशिष्टज्ञाननाश्यतावच्छेदकं यदि तत्समानविषयाज्ञानत्वं तदा नेयमित्यादिवाक्यजन्यज्ञानादिदं न द्रव्यमिति भ्रमप्रयोजकाज्ञानस्यापि नाशापत्तिरिति वाच्यम् । अज्ञानान्तरव्यावृत्तायास्तु तत्संशयादिजनकतावच्छेदकशक्तेरेव तथात्वात्। न चैवं पल्लवाज्ञानानामपि किंचिदवच्छिन्नविषयताकत्वं घटादेवच्छेदकत्वादिकल्पनमपेक्ष्याज्ञान एव शक्तिविशेषकल्पनात् न स्यादिति वाच्यम्। घटः सन्नित्यादिज्ञानीयसदादिविषयतायां घटाद्यवच्छिन्नत्वस्यानुभाविकतया सयुक्तिकतया च तदपलापायोगेन तन्निवर्तनीयाज्ञानस्योक्तविषयतानिरूपकत्वमात्रेणोपपत्तावतिरिक्तविषयताकल्पने मानाभावादेव तत्सिद्धेः। उपलक्षितबोधे च नोपलक्षणस्य विषयतेत्युक्तम्।

यदि च नेदं द्रव्यं नायं स इत्याद्येकधर्मोपलक्षिते अपरधर्मोपलक्षितभेदविभ्रमप्रयोजकाज्ञानानां परस्परविलक्षणविषयताशालित्वमावश्यकमित्याग्रहः तदा प्राचीनतार्किकमते तटस्थज्ञानविषयस्यैव विशेषणस्य यथाज्ञानविषयतावच्छेदकत्वम् । तद्वदत्रापि विषयकोट्यप्रविष्टानामेव तत्तेदंतादीनामज्ञानादिविषयतावच्छेदकत्वमुपेयते । उपलक्षणानां तत्तद्बोधाविषयत्वाच्च न वेदान्तानां बाधितार्थविषयकबोधपरत्वलक्षणमप्रामाण्यम्। न च तटस्थज्ञानविषयस्यैव विशेषणत्वमिति वादिनां तार्किकाणां मते तटस्थज्ञानविषयरजतत्वाद्यवच्छिन्नशुक्त्यादिविषयकज्ञानाप्रामाण्यवद्वेदान्ततात्पर्यविषयीभूतबुद्धेरप्यप्रामाण्यापत्तिरिति वाच्यम् । तदवृत्तिधर्मावच्छिन्नविषयताशालित्वेन तेषां मते तद्बुद्धेरप्रामाण्येऽपि उक्तज्ञानस्यातादृशत्वेनाप्रामाण्यायोगात् । न च सिद्धान्ते कल्पितरजततादात्म्याद्युपलक्षितशुक्त्यादिमात्रविषयकं ज्ञानमपि व्यावहारिकप्रमा स्यादिति वाच्यम् । इष्टापत्तेः। यथा हि नव्यप्राभाकरमते विभिन्नज्ञानविषयस्य रजतत्वादेर्ज्ञानान्तरविषयादिशुक्त्यादिविषयतायामवच्छेदकत्वेऽप्यन्यथाख्यात्यभ्युपगमापत्त्या न सिद्धान्तहानिः, न वा सर्वज्ञानानां प्रामाण्यक्षतिः । एवं सिद्धान्तेऽपीति वक्तुं शक्यत्वात् । सर्वज्ञानप्रामाण्यमुपपादयद्भिः तत्त्वशुद्धिकृदादिभिः विषयाणां प्रमाणवृत्तिविषयतायामवच्छेदकत्वमेव । न तु विषयत्वम् । तच्च चिदेकरसनिष्ठमिति न प्रत्यक्षादीनामपि प्रामाण्यक्षतिरित्युक्तत्वाच्च । स्पष्टं चेदं दीक्षितश्रीचरणैःएतत्तत्त्वशुद्धिकारादिमतं सिद्धान्तलेशसंग्रहेऽप्युपपादितमिति स्थितम् ।

उपलक्षणानामुपलक्षितविषयतायां निरूपकत्वप्रयोजकत्वादिलक्षणस्वरूपसंबन्ध एवोपेयते न त्ववच्छेदकत्वमित्यपि वदन्ति । एवं च कर्तृत्वात्यन्ताभावादीनामात्मस्वरूपत्वे अतिरिक्तत्वे वा अनुपपत्त्यभाव इति सर्वं चतुरश्रम् ।

नच प्रबलप्रत्यक्षविरोधेनात्मनः कर्तृत्वाद्यत्यन्ताभावादिरूपं शुद्धत्वं नाभ्युपगन्तुं युक्तमिति वाच्यम्। अहं मनुष्यो गौर इत्याद्यप्रमाणप्रवाहपतितस्य कर्तृत्वादिप्रत्ययस्याप्यप्रामाण्यशङ्कास्कन्दितत्वेन श्रुतिस्वारस्यबाधनाक्षमत्वात्। न चाहं मनुष्यो गौर इत्यादिप्रत्ययानां भ्रमत्वमसिद्धम्; मम देह इत्यादिभेदव्याप्तसंबन्धानुभवेन योऽहं बाल्य इत्यादि प्रागुक्तदेहव्यावर्तकदशाद्वयानुगमानुभवेन च प्रतिरुद्धतयोक्तप्रत्ययानां देहाभेदगोचरत्वायोगादिति वाच्यम्। ममात्मेत्यादिप्रत्ययवदुक्तसंबन्धावगाहिप्रत्ययस्याभेदप्रत्ययाविरोधित्वात्। द्वितीयस्यापि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञानस्य दोषविशेषजन्ये पीतः शङ्ख इत्यादिविभ्र इव देहात्माभेदगोचरानादिविपरीतवासनारूपदोषविशेषजन्ये मनुष्योऽहमित्यादिविभ्रमेऽपि न विरोधित्वम्। न च नाहं देह इति साक्षात्कारस्तद्विरोधी। तादृशविरोधिसाक्षात्कारस्यासिद्धेः। तथाहि—न तावद्देहत्वं चेष्टाश्रयत्वं; अहं चेष्ट इत्येवानुभवेन तद्भेदस्यात्मनि ग्रहीतुमशक्यत्वात्। नापीन्द्रियाश्रयत्वम्। इन्द्रियाणामतीन्द्रियत्वेन तद्घटितधर्मावच्छिन्नभेदस्य योग्यानुपलब्ध्यसंभवात्। अहं चक्षुष्मानित्यादिप्रत्ययाच्च। नापि भोगाश्रयत्वम्। अहं भुञ्ज इत्यनुभवस्यापि जागरूकत्वात। नापि भोगावच्छेदकत्वं तदवच्छिन्नभेदसाक्षात्कारसंभवेऽपि मनुष्यत्वादिना शरीराभेदग्रहे बाधकाभावात्। नहि मनुष्यत्वादिरूपेणापि देहस्य सुखाद्यवच्छेदकता गृह्यते येन तद्रूपेण गृह्यमाणे आत्मनि तद्धर्मावच्छिन्नभेदो न गृह्येत। रजते शुक्तित्वादिनेदमर्थभेदग्रहेऽपि इदंत्वादिनाऽभेदग्रहदर्शनात्। अत एव देहो न चक्षुरित्यादिरीत्या परस्परं गृह्यमाणभेदयोः कथमेकस्मिन् धर्मिणि युगपदभेदाध्यास इति परास्तम्। येन रूपेण भेदग्रहः तदन्यरूपेणाभेदाध्यासोपपत्तेः। दूरस्थे स्थाणौ भेदभ्रमदशायां इमौ मित्रदत्तयज्ञदत्तौ इत्यारोपवत् तत्रापि स्थाणुर्न यज्ञदत्तो नापि मित्रदत्तो, यज्ञदत्तश्च न मित्रदत्त इति विवेकसामान्यात्। शुक्लत्वव्याप्यबलाकात्ववत्तया निश्चितेऽपि धर्मिणि नीला बलाकेत्यादिप्रत्ययस्य चन्द्रिकादिदोषवशादिव व्यावर्तकसाक्षात्कारसत्त्वेऽप्यात्मनि दोषादभेदप्रत्ययोपपत्तेश्च।

**यत्तु** यदा यदा भेदकसाक्षाक्षात्कारस्तदा तदा भेदप्रत्यक्षमिति व्याप्तिःरात्र्यां नीला बलाकेत्यादिप्रत्यक्षदशायां नीलभेदव्याप्यबलाकात्वप्रत्यक्षे सत्यपि नीलभेदप्रत्यक्षाभावेन व्यभिचारादसंभवेऽपि यत्र यत्र भेदकप्रत्यक्षं तत्र तत्र भेदप्रत्यक्षमिति व्याप्तौ न किंचिद्बाधकमिति **नवीनोक्तम्** **तन्न** ममापीदृशव्याप्तावविद्वेषात् स्वप्नादौ शरीरान्तरपरिग्रहदशायां नाहं मनुष्य इत्यादिशरीरभेदप्रत्यक्षोपगमात्। न च तावन्मात्रेणाहं मनुष्य इति प्रत्ययानामभेदावगाहित्वमनुपपन्नं अविरोधात्। **यदपि** जातमात्रस्य पश्वादेः प्रवृत्तिसाधनीभूतेष्टसाधनत्वाद्यनुमितिहेतुः यत्स्तन्यपानं मदिष्टसाधनं यथा पूर्वदेहीयं स्तन्यपानमित्यादिव्याप्तिस्मृतिस्तावन्न देहान्तरास्मृतौ युक्ता। न च मम प्राग्देहान्तरमभूदिति स्मरतः तस्यैक्यधीः संभवति। किं त्वनेकमणिस्यूतसूत्रमिवानेकदेहेष्वनुस्यूतमात्मानं पश्यतः स्वतो भेदधीस्त्रेति। **तन्मन्दम्**। उक्तस्थले प्रवृत्त्यनुरोधेन स्तन्यपानं मदिष्टसाधनमिति स्मरणमात्रस्यावश्यकल्प्यत्वेऽपि पूर्वदेहस्मरणादिकल्पनायां बीजाभावात्।

**यच्च** मनुष्यत्वादेर्देहविशिष्टात्मवृत्तित्वात् अहं मनुष्य इत्यादिर्नाध्यास इति तदपि शिथिलम्। तस्यात्ममात्रवृत्तित्वे चाक्षुषत्वानुपपत्तेः। शुद्धस्याचाक्षुषत्वेऽपि विशिष्टस्य चाक्षुषत्वात् तद्गतस्य मनुष्यत्वादेरपि चाक्षुषत्वं नानुपपन्नमिति चेन्न। रूपशून्यतया विशिष्टस्यापि चाक्षुषत्वायोगात्। विजातीयचक्षुःसंयोगस्यैव चाक्षुषहेतुता न रूपादेरिति चेत् द्रव्यनिष्ठचाक्षुषविषयताया रूपविषयतानिरूपितत्वनियमेनातादृशस्यानुभवविरुद्धत्वात्। मामहं मनुष्यं पश्यामि त्वामहं मनुष्यं पश्यामीत्यनुभवोऽस्ति इति चेन्न। तथा सति स्थूलं मामहं पश्यामि गौरं मामहं पश्यामि इत्यनुभवानुरोधादात्मनि स्थौल्यगौरत्वादेरपि स्वीकारापत्तेः। अथ शरीरात्मोभयवृत्ति तत्। तथापि मामहं मनुष्यं पश्यामीति प्रतीतेरनुपपत्तितादवस्थ्यात् नाहं गौरो मनुष्य इति प्रतीत्यापत्तेश्च।

ननु रूपादिकमपि विशिष्टात्मगतमुपेयत इति नवीनमाध्वेनोक्तमिति चेत्। एवं सतीमौ मनुष्यवित्याद्येकैकात्मतच्छरीरोभयावगाहिप्रत्ययापत्तेः दुर्वारत्वात् सामग्रीसौलभ्यात्। न चैवं तवाप्यहं भोगावच्छेदक इति प्रत्ययापत्तिः। तस्यारोपरूपस्य दोषाधीनतया तदभावेनैव तदनापत्तेः। न च दोषोऽपि कल्पनीयः। कल्पकाभावात् आरोपे सतीत्यादिन्यायात् तव तु सन्निकर्षादिघटिता प्रमासामग्री क्लृप्ता। मनुष्यवृत्तेः व्यासज्यवृत्तित्वादिकमपि अनया दिशा निरसनीयम्। एवमात्मनि रूपोपगमे कृशोऽहं कृष्णं इत्यादिस्ववचनविरोधः। न चात्मनि मनुष्यत्वादेः परंपरासंबन्धभानोपगमान्नोक्तप्रत्ययानां भ्रमत्वमिति युक्तम्। ज्ञातृत्वादिसमकक्षतया प्रतीयमानत्वात्। असति भेदग्रहे साक्षात्संबन्धाभानकल्पकाभावात्। न चाप्रमात्वे दोषादिकल्पनागौरवभयात् परंपरासंबन्धावगाहित्वमङ्गीक्रियत इति सांप्रतम्। एवं सति भ्रममात्रोच्छेदप्रसंगात्। न च बाधकबलात्तस्य भ्रमत्वम्। बाधस्य साक्षात्संबन्धावगाहित्वेन परंपरासंबन्धावगाहिज्ञाने भ्रमत्वापादकत्वायोगात्। उक्तरीत्या साक्षात्संबन्धावगाहिनो नाहं गौर इत्यादिप्रतीत्यापत्तेः दुर्वारत्वाच्च। कर्दमलिप्ते वस्त्रे कृष्णं वस्त्रमित्यादिप्रत्ययेऽपि परंपरासंबन्धावगाहिताया असिद्धेश्च। देहगतमनुष्यत्वस्यैवात्मनि संसाराध्यासोपगमेन मन्मते मनुष्यत्वद्वयापादनस्य तदधीनस्येमौ मनुष्यावेति प्रत्ययापादनस्य च नावकाशः। मनुष्यत्वयोर्वस्तुतो भेदेऽपि तयोस्तद्धर्मिणोश्च दोषवशादगृहीतभेदतया हेत्वभावेन द्वित्वप्रत्यक्षप्रसञ्जनस्यायुक्तत्वाच्च।

यदपि ब्राह्मणो यजेतेत्यादिविध्यनुरोधाद् ब्राह्मण्यमात्मनिष्ठं वाच्यम्। ब्राह्मणशरीराभेदाध्यासस्याधिकाररूपत्वे च तस्य शापादिना चण्डालभावं प्राप्तेष्वपि प्राक्सत्त्वेन तेषामपि यागाद्यधिकारितापत्तेः। तद्विशिष्टस्याधिकारित्वे च सुप्तमूर्च्छितादौ तदभावापत्तिरिति। तदपि न। उक्ताध्यासविशिष्टस्यैवाधिकारित्वोपगमात्। सुप्त्यादिदशायां यज्ञादिकर्तृत्वाभावेन तदधिकाराभावे इष्टापत्तेः।

वस्तुतस्तु व्यावहारिकं ब्राह्मणत्वविशिष्टप्रतियोगिकतादात्म्यमेव तत्र विवक्षितम्। परमार्थस्तु ब्राह्मणत्वादेः व्यावहारिकाधारतासंबन्धेन ब्राह्मणपदप्रवृत्तिनिमित्तत्वोपगमादात्मन्यपि ब्राह्मण्यमप्रत्यूहमेव। संस्कारविशेषो ब्राह्मण्यमित्युक्तौ तु पूर्वोक्तगतिराश्रयणीया। न च ब्राह्मण्यस्य देहमात्रवृत्तित्वे मृतब्राह्मणशिरश्छेदे ब्रह्महत्यापत्तिरिति नवीनोक्तं युक्तम्। चरमशरीरप्राणवियोगानुकूलव्यापारस्य हिंसाशब्दार्थतयोक्तापादनस्य महामोहानुग्रहैकफलत्वात्।

यदपि मृतब्राह्मणशरीरस्य पादस्पर्शे शवस्पर्शातिरिक्तस्य प्रायश्चित्तस्य शिष्टैरननुष्ठानात् त्वन्मते च तदापत्तिरिति । तन्न । तत्र शिष्टाचारानुरोधेन ब्राह्मणो न पदा स्प्रष्टव्यः इति विधेः जीवद्ब्राह्मणविषयकत्वोपगमात् । जीवन्मुक्तेऽपि ब्राह्मण्यसंबन्धःब्राह्मणशरीरतादात्म्यादिकमस्त्येव यावत्प्रारब्धमविद्यावरणनाशेऽपि तद्विक्षेपशक्त्यनुवृत्त्या तत्कार्यानुवृत्तेरुपगमात् ।

यत्तु योऽहं स्वप्ने व्याघ्रदेहवान् सोऽहं मनुष्यदेहवानित्यननुगतदेहादनुगतात्मनो भिन्नत्व-प्रतीत्या नाध्याससंभव इति **नवीनमाध्वेनो**क्तम् । तदसत् । मतुपः संबन्धमात्रार्थकतया तन्मात्रावगाहिप्रत्ययाविरोधस्योक्तत्वात् ।

ननु व्याघ्रो न मनुष्यः इति परस्परव्यावृत्तत्वेन गृह्यमाणयोः व्याघ्रमनुष्ययोः कथमेकत्र तादात्म्याध्यास इति चेन्न । युगपदुभयाध्यासविरहेणानुपपत्त्यभावात् । प्रातिभासिकं च व्याघ्रादि-तादात्म्यं न मनुष्याभेदविरोधि वासनामयव्याघ्रत्वादौ स्वप्नदृष्टे मनुष्यादितादात्म्याविरोधितायास्त्व-यापि वाच्यत्वात् तुल्ययुक्त्या स्वाप्निकव्याघ्रत्वादेरात्मनिष्ठतायास्तवापि दुर्वारत्वात् । योगव्याघ्रस्तु तत्तद्देहप्रवेशकाले देहान्तरभेदमेव साक्षात्करोति । न तु तत्तद्देहभेदं तज्ज्ञानं च तस्य योगजं यौक्तिकं वा । न च तत्प्रारब्धाधीनानुवृत्तिकतत्तद्देहतादात्म्याध्यासनिवर्तनक्षमम् । अधिकं चाग्रे निरूपयिष्यते । बालस्थविरदेहयोरपि भेदो नात्यन्तिकः प्रतीयते । योऽयं बाल्ये मम पुष्टो देहः आसीत् स इदानीं कृशो जात इति कार्श्यस्थौल्योपलक्षितदेहयोरभेदस्यापि प्रत्ययात् । यथाहि यो बाल्ये मूर्खः आसं सोहं इदानीं पण्डितोऽस्मि जात इत्यात्मविषयकप्रत्ययः तद्वत् । देहात्म-विवेकशालिनं प्रति तद्वत्ताप्रयुक्तस्य अहं गौर इत्यादेः गौणत्वेऽपि नैसर्गिकतादृशव्यवहारस्यापि गौणताकल्पनं युक्तम् । पश्वादिभिश्चाविशेषादिति न्यायात् । किं चाहमिहैवास्मि सदने जानान इति आत्मनि प्रादेशिकत्वावगाहनादप्यहंप्रत्ययः कपिलकणभुगादीनामपि न प्रमाणत्वेनाभिमतः । स्मृतिश्च—

भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत्
अहं ममेत्यसद्ग्राहं करोति कुमतिर्मतिम् ।
निरोधोत्पत्त्यणुबृहन्नानात्वं कल्पितान् गुणान् ।
अनुप्रविश्य आदत्त एवं देहगुणान् परः ।
पूर्वपूर्वभ्रमोत्पन्नवासनाया बलेन तु
देहेन्द्रियादिसंघातेऽहंमतिर्जायते दृढम् ।
देहेन्द्रियादयो भावा नाहमर्था निरूपणे ।
अतो देहादिसंघातेऽहंममेत्यादिकां मतिम् ।
विसृज्य सूक्ष्मचैतन्ये विद्वान् कुर्यादहंमतिम् ।

इत्यादिका अस्मदभिमतमध्यासमेवानुगृह्णाति । तथा च अहं मनुष्य इत्यध्याससहस्रमध्यपतितस्य अहं कर्तेत्यादिप्रत्ययस्याप्रामाण्याशङ्काकलङ्कितत्वात् न श्रुतिस्वारस्यबाधनक्षमत्वमित्यनवद्यम् ॥

अत एव भाष्ये अध्यासस्याक्षेपतन्निरासाभ्यामुपपादनमर्थवत् । तदेतत्सर्वमभिसंधायोक्तं **निबन्धे**-तदेवमुक्तेन क्रमेणाहंप्रत्यये पूतिकूश्माण्डीकृते भगवतीश्रुतिरप्रत्यूहा कर्तृत्वभोक्तृत्वदुःखशोकाद्यात्मकत्वमहनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हति । तदेवं सर्वप्रवादश्रुतिस्मृतीतिहासपुराणप्रसिद्धमिथ्याभावस्याहंप्रत्ययस्य स्वरूपनिमित्तफलैरुपव्याख्यानमन्योन्यस्मिन्नित्यादीति । **विवरणे** तु न प्रत्यग्ब्रह्मैक्यं विषयः कर्तृत्वादेर्विरुद्धधर्मस्य सत्यत्वेनैक्यायोगात् । नापि तन्निवृत्तिःप्रयोजनम् । ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य बन्धस्य ज्ञानान्निवृत्त्ययोगादिति प्राप्ते—सत्यं कर्तृत्वभोक्तृत्वादिप्रपञ्चस्य सत्यत्वे विषयादि न सिद्ध्यति । प्रपञ्चस्तु मिथ्यैवात एव भाष्येऽध्यासवर्णनमित्युक्तम् । न चात्र निर्दोषया श्रुत्या तात्विककर्तृत्वादिमतो जीवस्य ब्रह्मणाऽभेदबोधने बाधकाभावात् न विषयार्थमध्यासवर्णनमावश्यकमिति वाच्यम् । प्रपञ्चमिथ्यात्वस्यारम्भणाधिकरणोक्तन्यायसिद्धतया तदाश्रयणेनैवोक्तविषयानुपपत्तिपरिहारसंभवे सिद्धान्त्यनभिमतकर्तृत्वादिसत्यतोपगमेन तत्समाधानस्यायुक्तत्वात् । किंच श्रुतेः प्राबल्यमपि श्रुतितात्पर्यविषयविरोधिप्रत्यक्षानुमानादित एवास्मकमनुमतम् नतु तत्प्रतीतार्थमात्रविरोधिप्रत्यक्षादितोऽपि ; आदित्यो यूपः यजमानः प्रस्तरः इत्यादौ आदित्यादिपदानां प्रत्यक्षाद्यविरोधाय यथाश्रुतार्थत्यागोपगमात् । एवं च वक्ष्यमाणरीत्या श्रुतेस्तत्त्वमादिपदार्थपरिशोधकवाक्यशक्तिपर्यालोचनया कर्तृत्वादेर्मिथ्यात्वमेवावगम्यत इति कर्तृत्वादिद्वैतात्यन्ताभावोपलक्षितशुद्धचिन्मात्रपरत्वावसायेन तद्विरोधिनो विरुद्धधर्मयोः सत्यत्वे तदाश्रययोरभेदानुपपत्तिरित्यादिन्यायस्य श्रुतिबाध्यत्वकल्पनमनुचितम् । अत एव भास्करादिरीत्या विषयोपपत्तिरपि न युक्ता ।

अपि च कर्तृत्वतदत्यन्ताभाववतोरभेदोपगमे स्वान्यूनसत्ताकस्वसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं कर्तृत्वादेरनिष्यमाणमपि दुर्वारमिति कथं कर्तृत्वसत्यताया अप्रतिक्षेपेण सिद्धान्तसंभवः ।

यथा चाखण्डार्थवादे तत्त्वमादिपदसार्थक्यं तथा दिगुपदर्शिता प्राक् । वक्ष्यते च । प्रयोजनार्थमपि तदभिधानं युक्तम् । यतः समूलस्य बन्धस्योच्छेदो हि प्रयोजनं सिद्धान्तिनेष्यते । तच्च न बन्धमिथ्यात्वं विनोपपद्यते । पापादीनां सेतुदर्शननाश्यत्वेऽपि समूलमुच्छेदादर्शनात् । केवलसेतुदर्शनस्य कृत्यसाध्यतया तद्विध्यसंभवात् । सेतुदर्शनोपधायककृतिसाध्यव्यापारविशेषस्यैव ब्रह्महत्यादिध्वंसोद्देशेन विधीयमानतया तस्यैव पापनाशहेतुता । न सेतुदर्शनस्येत्यपि वदन्ति ॥

इत्यध्यासभाष्यभानुप्रभा संपूर्णा ॥

श्रीगणेशाय नमः

# जिज्ञासाभाष्यम्



## ॥ अथातो ब्रह्मजिज्ञासा ॥

ओम् ॥ अत्राथशब्द आनन्तर्यार्थः परिगृह्यते । नाधिकारार्थः । ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति **भाष्यम्** । तत्र यद्यपि जिज्ञासाशब्दावयवार्थज्ञानेच्छाया अनधिकार्यत्वेऽपि तल्लक्षितस्यार्थिकस्य वा विचारस्याधिकार्यत्वं संभवति । तथाप्यथशब्दस्याधिकारार्थत्वे विचारप्रयोजनादेरन्यस्मात्सौत्रशब्दादलाभेन विचारस्यापि प्रयोजनाधिकार्याद्यनवगतौ अनधिकार्यत्वात्प्रेक्षावदनुपादेयत्वादित्युक्तभाष्यार्थः ।

एवं चारभ्यत्वेन तदभिधानेऽपि प्रयोजनाधिकार्यादीनामवश्यवक्तव्यतया अथशब्दस्य तत्प्रतिपत्त्युपयोग्यानन्तर्यार्थकत्वमेव युक्तमिति भावः ।

**यत्तु**—विवरणमते मोक्षस्य फलत्वं मोक्षकामनाया अधिकारिविशेषणत्वं च न युक्तम् । श्रवणस्य मोक्षहेतुतया अप्राप्तत्वेन तदुद्देशेन श्रवणविध्यभ्युपगमे तस्यापूर्वविधित्वापातात् मुमुक्षोरपि ज्ञानकामनां विना विचारेऽप्रवृत्तेः । तन्मते च वक्ष्यमाणरीत्या ज्ञानकामनानुपपत्तेश्च । अत एव विचारविधौ ज्ञानकामोऽधिकारी । ज्ञानं च फलमिति निरस्तम् । अध्ययनविधेः ज्ञानकामाधिकारं निषेधता त्वया अज्ञाते ज्ञाने कामनायोगात् ज्ञातज्ञाने च तदवच्छेदकविषयस्यापि ज्ञातत्वात् पुनस्तज्ज्ञाने कामनायोगादिति युक्त्या ज्ञानकामनानिषेधादिति । तदेतद्विवरणपङ्क्त्यर्थानबोधनिबन्धनम् ।

तथाहि—इत्थं हि तत्र **विवरणग्रन्थः**—उपदेशादेवाग्निहोत्रादिवाक्यार्थविशेषाः प्रतिपन्ना इति चेत् तर्हि वाक्यार्थविशेषज्ञानानामपि सिद्धत्वात् न तत्र कामना संभवेत् । अथौपदेशिकज्ञानस्याप्रमाणत्वात्तत्र निर्णयज्ञानं काम्यत इति चेत् न । अप्रामाण्ये निश्चिते तत्र निर्णयज्ञानकामनायोगादर्थस्य विभ्रममात्रत्वादौपदेशिकस्य संदिग्धे प्रामाण्ये तत्प्रामाण्यविचारस्यैवावसरो नाध्ययनस्येति । तत्र ह्यर्थज्ञानमुद्दिश्याध्ययनं न विधातुं शक्यते । अग्निहोत्रादिविशेषितनिर्णयज्ञानं विना तत्कामनाया अयोगात्तन्निर्णयस्य ज्ञातत्वे च तस्योद्देश्यतया सिद्धत्वात् । ज्ञातेऽपि निर्णये तत्प्रामाण्यसंदेहात् तद्व्युदासायाध्ययनविधिरित्यपि न युक्तम् । विचारैकसाध्यायाः प्रामाण्यसंशयनिवृत्तेरप्रामाण्यज्ञानानास्कन्दितनिश्चयस्य वा अध्ययनमात्रासाध्यतया तदुद्देशेन तद्विधानायोगादिति रीत्या ज्ञानकामाधिकारिकत्वमध्ययनविधेर्निराकृतमिति गम्यते । न चैतावता परोक्षापरोक्षसाधारणज्ञानकामनामात्रं निरस्तम् । तत्रैव ततश्च प्रतिपन्ने वस्तुनि ज्ञानमिष्यमाणं संदिग्धे निश्चयफलं वा

परोक्षेऽपरोक्षफलं हि इष्यते । तच्चोभयं प्रमाणादिविचारप्रयत्नसाध्यमिति प्रतिपन्नवस्तुनि विशिष्य ज्ञानमिष्यमाणं प्रमाणादिविचारमविनाभावेन गमयतीति जिज्ञासापदार्थविचारप्रसङ्गे स्पष्टमभिधानात् ।

यद्येवं साक्षात्परंपरया वा पुरुषार्थपर्यवसाय्यर्थज्ञानमुद्दिश्याध्ययनविधाने न किंचिद्बाधकमिति चेत् । तर्हि स्वाध्यायोऽध्येतव्य इत्यत्र परंपरया पुरुषार्थपर्यवसायिन्या अक्षरावाप्तेरेवोद्देश्यतासंभवेन तव्यप्रत्ययावगतप्रधानभावस्य स्वाध्यायस्योपसर्जनताकल्पने प्रमाणाभावेनोक्तज्ञानोद्देशेनाध्ययनं विधीयत इत्युक्तिरनुपपन्नैव ।

एतदप्युक्तं पञ्चपादिकाविवरणयोः । तथाहि तत्र **टीका**—माभूत् ब्रह्मज्ञानार्थता वेदार्थत्वादेव ब्रह्मज्ञानं कर्तव्यं स्वाध्यायाध्ययनस्यार्थावबोधफलत्वात् । स्यादेवं यद्यर्थावबोधनफला अध्ययनक्रिया स्यात् । सा ह्यधीयमानाप्तिफलत्वादक्षरग्रहणान्ता । अथाक्षरग्रहणं निष्प्रयोजनमिति न तत्र पर्यवसानं विधेः । भवतु तर्हि सक्तूनां गतिः । तदपि न, अक्षरेभ्यः प्रयोजनवदर्थावबोधदर्शनात् । तर्हि न निष्प्रयोजनान्यक्षराणि इत्यतस्तत्पर्यन्तमध्ययनं न निष्फलम् । अतोऽक्षरग्रहणादेव नियोगसिद्धेः फलप्रयुक्त एवार्थावबोध इति ।

**विवरणं** च तव्यप्रत्ययेन भावनाकर्मकारकेऽभिधीयमाने स्वाध्याये स्वावाप्तिफले च न भाव्यान्तरं कल्पनीयम् । भावनाकर्माभिधायिशब्दविरोधात् । ननु न भाव्यमात्रेण पुरुषप्रवृत्तिर्विधिना जन्यते । किं तु पुरुषार्थभाव्यापेक्षयैव । ततश्च शब्दविरोधेऽपि भावनानिष्पत्तये अर्थावबोधो भाव्यत इति शङ्कते–**अथाक्षरग्रहणं निष्प्रयोजनमिति** । परिहरति–**भवतु तर्हि सक्तूनां गतिरिति** । अयमाशयः—अर्थनिर्णयस्याध्यायनमात्रादनिष्पत्तेःश्रूयमाणस्य स्वाध्यायस्य चाफलत्वादध्ययनमात्रस्य चाप्रयोजनतया भाव्यत्वायोगात् स्वाध्यायाध्ययनेन स्वर्गं भावयेदिति कल्प्यत इति ।

ननु व्याकरणस्याप्यङ्गत्वात् साङ्गाध्ययनात् विधीयमानादर्थनिश्चयो दृष्टफलतया जायते । तस्य च विरोधपरिहाराय विचारः प्रयुज्यते । अतो दृष्टे सत्यदृष्टकल्पना न न्याय्येति चोदयति—**तदपि नाक्षरेभ्यः प्रयोजनवदिति** । परिहरति—**न तर्हि निष्प्रयोजनानीति** । श्रूयमाणस्वाध्यायलक्षणात् कर्मण एवाध्ययनभावनया भाव्यमानात् फलवदर्थावबोधसिद्धेः । पञ्चन्नादीनां प्रयोजनं प्रति परंपरया साधनानामपि भाव्यत्वदर्शनात् श्रूयमाणस्वाध्यायावाप्तिपर्यन्त एव विधिव्यापार इति । तथाचोक्तक्रमेण स्वाध्यायाध्ययनविधेरर्थज्ञानोद्देश्यकतानिराकरणेऽपि न परोक्षनिर्णयकामनामात्रस्य निराकरणं विवरणाद्यभिप्रेतमिति युक्तं मुमुक्षुत्वाद्याधिकारिकत्वं विचारविधेरिति । श्रोतव्यादिवाक्यानां यथा नियमविधिपरत्वं तथोपरिष्टाद्वक्ष्यते ।

यद्यपि-ननु चाश्रूयमाणाधिकारोऽध्ययनविधिरिति पञ्चपादिकाग्रन्थोऽर्थावबोधमुद्दिश्य अध्ययनविध्यभावे वेदानामर्थावबोधपरत्वं न स्यादिति विवरणप्रकरणेऽवतारितः । तथापि तदुद्दिश्य

तदविधानेऽपि नास्ति बाधकम् । उपक्रमादिभिरेव तात्पर्यस्य निर्णेतुं शक्यत्वादिति विवरणे तत्त्वदीपने चोक्तम् ।

एवं च चरममाशङ्कितस्य तात्पर्यानुपपत्तिदोषस्य परिहृतत्वात्पूर्वापरपञ्चपादिकाविवरण-पर्यालोचनेन उपवर्णितदिशा अर्थज्ञानोद्देश्यतानिराकरणेन सर्वथा अपरोक्षज्ञानकामनानिराकरणे न विवरणादेस्तात्पर्यमिति ।

**यदपि** परोक्षज्ञाने कामनाया अयोगेऽपि परोक्षेण प्रतिबद्धापरोक्षेण वा ज्ञानेन ज्ञात-ब्रह्मावच्छिन्ने अपरोक्षज्ञाने अप्रतिबद्धापरोक्षज्ञाने वा कामना श्रवणरूपविचारविध्यधिकारिविशेषणम-स्त्वित्याशङ्क्य इच्छाया अपरोक्षत्वात् तदवच्छेदकज्ञानावच्छेदकविषयस्याप्यपरोक्षत्वादिच्छास-मकालवर्त्यपरोक्षज्ञानस्य विचारसाध्यत्वानुपपत्त्या तन्न युक्तमिति परेणोक्तम् । **तदसत्** । अपरोक्षे-च्छावच्छेदकज्ञानाद्यवच्छेदकत्वेनापरोक्षत्वे तुल्यन्यायेनापरोक्षेच्छाद्यवच्छेदकतया धर्मादीनामप्यपरो-क्षतापत्तेः। अविद्यानिवर्तकतावच्छेदकशक्त्यादिविशिष्टस्य ब्रह्मज्ञानस्य प्रागसिद्धतया तत्कामनायां बाधकाभावाच्च ।

**एतेन** श्रवणसाध्यस्यापरोक्षज्ञानस्य अप्रतिबद्धापरोक्षज्ञानस्य वा तस्मात्प्रागसत्वेन तदधी-नाया अपरोक्षज्ञानकामनायाः श्रवणविध्यधिकारिविशेषणत्वायोगः । न च कामनाहेतुपरोक्ष-ज्ञानादिकं श्रवणात्प्रागापातप्रतीतिदशायां सिद्धमिति वाच्यम् । तस्यां दशायां निश्चयरूपस्य तस्याभावात् । नहि वेदान्तवेद्यं सर्वं परोक्षज्ञानादिना निश्चित्य अपरोक्षार्थं मीमांसायां प्रवर्तन्ते । संदेहरूपस्य च तस्य तस्यां दशायामभावेऽपि न ज्ञातब्रह्मावच्छिन्नपरोक्षनिश्चय एव कामनोपपत्तिः । निश्चिते निश्चयकामनाया अदर्शनेन निश्चयविषयकसंदेहस्यैव तत्र हेतुत्वादिति **परास्तम्** ।

श्रवणप्रयोजककामनायां श्रवणसाध्यस्य ज्ञानस्य विषयत्वेऽप्यहेतुतया तत्प्राक्सत्ताया अनपेक्षणात् तादृशज्ञानस्यापेक्षितत्वेऽपि तमेव विदित्वातिमृत्युमेति तरति शोकमात्मवित् ब्रह्मविदा-प्नोति परम् एतावदरे खल्वमृतत्वम् आत्मा वा अरे द्रष्टव्यः इत्यादिवाक्यादन्यस्माद्वा तत्प्रतिपत्ति-रुपपद्यत एवेति न किंचिदवद्यम् ।

ब्रह्मविषयकपरोक्षनिश्चयकामनापि नास्माभिः प्रतिषिद्धेत्युक्तम् । **यदपि** स्थाण्वादि-संदेहदशायां तद्विशेषापरोक्षज्ञानकामना तद्विशेषपरोक्षनिश्चयधीपूर्विका स्यादिति । **तन्न** । यादृश-विषयविशेषितज्ञाने कामना तादृशविषयज्ञानस्य प्रागपेक्षितत्वोपगमात् स्थाणुविषयकप्रत्यक्षं मे भूयादितीच्छायां च स्थाणुत्वप्रकारकज्ञानापेक्षास्त्येव । स्थाणुत्वविशिष्टेदमर्थविषयकप्रत्यक्षं जायतामि-तीच्छायामपि तज्ज्ञानं संशयसाधारणमपेक्षितमेव । तर्ह्यग्निहोत्रादिविषयसंशयबलात् तन्निश्चये कामनोपपद्यत एवेति चेत् इष्टत्वात् । यदि पुनरौपदेशिकं ज्ञानं शाब्दत्वान्न संशयरूपम् । एवं विशेषणतावच्छेदककोट्यंशे संशयात्मकं ज्ञानमनुभवविरुद्धम्। एवं चेदमर्थे स्थाणुत्वादिसंशयदशायां न स्थाणुत्वेन रूपेणेदमर्थस्य ज्ञानविशेषणता संभवति । तद्धेतोर्विशेषणतावच्छेदकादिप्रकारक-

विशेषणवत्तानिश्चयस्याभावादिति मन्यते । तदा तादृशकामनानिर्वाहाय तादृशं निश्चयात्मकं ज्ञानमवश्याभ्युपेयमेव । तदभावे तादृशकामना नास्तीत्येव वाच्यमित्यभिप्रायेणैव अग्निहोत्रादिज्ञानकामना न संभवतीत्युक्तम् ।

यदि च तदानीन्तनेच्छायां ज्ञानस्येदंत्वावच्छिन्नविशेष्यतानिरूपितस्थाणुत्वादिप्रकारताशालित्वेन भानमुपेयते । एवमप्रामाण्यसंशयाहिताग्निहोत्रादिवाक्यार्थसंशयदशायामुक्तरीत्याग्निहोत्रादिज्ञानस्यापि कामनाविषयत्वमुच्यते । तदा कामनायाः संभवेऽपि तस्याध्ययनासाध्यात्वादेव नोद्देश्यतेत्यादिकमेव दूषणमाकरानुमतम् ।

यच्च परोक्षज्ञाने कामनानङ्गीकारे धर्मविचारे प्रवृत्तिर्न स्यादिति तदुक्तान्यतरपक्षावलम्बनेन निरस्तप्रायम् । उक्तप्रकारेण निश्चयकामनया संशयनिवृत्तिकामनया संजातनिश्चयज्ञाने अप्रामाण्यशंकानिवृत्तिकामनया वा धर्मविचारे प्रवृत्तिसंभवादिति **सर्वमनवद्यम्** ।

पराभिमतः प्रागज्ञातविशेषाकारविशिष्टविषयविशिष्टज्ञानेच्छावादः परमप्रामणिकः । साक्षात्साक्षिवेद्यताशून्यपदार्थानां प्रमाणान्तरानुपनीतानां ज्ञानाद्यवच्छेदकतया साक्षिवेद्यत्वायोगेन विषयावच्छिन्नज्ञानविशिष्टेच्छायाः साक्षिवेद्यत्वायोगात् । इच्छादीनां विशिष्टविषयावगाहित्वेन साक्षिवेद्यतानियमादिति । तस्माद्विचारविधेः ज्ञानकामाधिकारिकत्वमुपपन्नतरम् ।

**एतेन** निबन्धरीत्या जिज्ञासाशब्दस्येच्छावाचकत्वेप्यार्थिकार्थेन विचारेणाध्याहृतस्य कर्तव्यपदस्येव श्रुतस्याधिकारार्थकाशब्दस्याप्यन्वयोऽस्तु । यथोक्तं **कल्पतरौ** आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहार इति । न चार्थिकार्थेनाध्याहृतस्यैवान्वयो न तु श्रुतस्येत्यत्र नियामकमस्ति । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यादौ द्रव्यदेवतासंबन्धाक्षिप्तेन यागेन यदाग्नेयोऽष्टाकपालो भवतीत्यादौ भवनाक्षिप्तभावनया च विधिप्रत्ययान्वयदर्शनादिति **परास्तम्** ।

नापि मङ्गलार्थः **मङ्गलस्य वाक्यार्थे समन्वयाभावादिति भाष्यम्** । तत्र पदार्थ एव वाक्यार्थे समन्वीयते । न चेह मङ्गलं अथशब्दस्य शक्यं लक्ष्यं वा । किंतु मृदङ्गध्वनिवदथशब्दश्रवणमात्रकार्यमिति निबन्धः । न चैवं मङ्गलस्याथशब्दार्थत्वाभावे तस्य वाक्यार्थे समन्वयाभावस्य हेतूकृतत्वात् तत्रार्थशब्दार्थत्वाभावस्य हेतुत्वोक्तौ अन्योन्याश्रय इति वाच्यम् । प्राथमिकस्य अथशब्दार्थत्वाभावस्य तत्तात्पर्यगोचरत्वाभावरूपतयान्योन्याश्रयत्वाभावात् । अन्यथा प्रकृताथशब्दस्यारम्भपरत्वाभावेऽपि तद्वाचकताया दुरपह्नवतया नाधिकारार्थ इत्यादेरसङ्गतत्वापातात् । वाक्यार्थे समन्वयाभाव इत्यस्याधुनिकलक्षणाग्रहाद्यजन्याथशब्दघटितवाक्यजन्यबोधविषयत्वाभाव इत्यर्थः । नातः शङ्कान्तरावकाशः ।

इदं च मङ्गलानन्तरेत्यादिकोशस्य मङ्गलार्थकत्वांशे न प्रामाण्यं मूलाभावादित्यभ्युपेत्य । उक्तं च परेणापि-अस्माभिरप्यानन्तर्याभिधेयोथशब्दः श्रुत्या मङ्गलप्रयोजन इत्यङ्गीकारादिति । अथेत्यनेन मङ्गलस्याप्रतीतेरिति च ।

विवरणे तु कोशादेः समूलत्वेऽपि न क्षतिः। वाक्यार्थे समन्वयस्तु न; कर्त्रादिभावेन जिज्ञासान्वयस्य बाधितत्वात्। सामानाधिकरण्येन तदन्वये निरर्थकानुवादत्वापत्तेश्च नोपपद्यत इत्युक्तम्। न च अधूमो गिरिरित्यादाविव मङ्गलत्वात् कर्तव्य इति हेतुसमर्पकविशेषणतासंभवात् न निरर्थकानुवादत्वमिति वाच्यम्। श्रेयः साधनतामात्ररूपस्यान्यस्य वा पदार्थान्तरसाधारणमङ्गलस्य मुमुक्षुकर्तव्यतारूपसाध्यान्वयानुपपत्तेः। नहि वह्निमत्वात्पर्वतो धूमवानिति वाक्यं प्रमाणम्। एतत्तत्त्वं तु तन्त्रान्तरे द्रष्टव्यम्।

**पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्यार्थाव्यतिरेकादिति भाष्यम्।** तत्राथशब्द आनन्तर्यपूर्वप्रकृतापेक्षाधिकारणामेकं सर्वान्वा विवक्षित्वा प्रयुज्यते। प्रागुक्तभेदलक्षणानन्तरोक्तत्वात् प्रकृतमपेक्ष्य शेषलक्षणमारभ्यते। कुत इति हेत्वपेक्षायां अत इति हेतुत्वोपदेशःयस्माद् भेदमविज्ञाय न शक्यं शेषलक्षणम् विज्ञातुमिति वार्तिकेऽथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वस्याप्युक्ततया तदाशङ्कासंगतिः। विंशतिलक्षण्या एकशास्त्रत्वात् कर्मविचारस्य पूर्वप्रकृतत्वं संभवत्येवेति न तदनुपपत्तिरित्येकदेशिमताभिप्रायेण चेदम्। कर्मविचारापेक्षानपेक्षयोः विप्रतिपत्तावप्यानन्तर्यार्थे विप्रतिपत्त्यभावात् उक्तविप्रतिपत्तेश्चाग्रे निरसनीयत्वादानन्तर्यार्थताविचारे न तद्दूषणाग्रहः कर्तव्य इति भावः।

न च तर्हि तदर्थकत्वमेकमेव कुतो नोक्तमिति वाच्यम्। सिद्धान्ते कर्मविचारस्य ब्रह्मविचारापेक्षणीयत्वानुपगमेन तदनुक्तेरिति। एतेन ब्रह्मविचारात्पूर्वप्रकृतस्य कस्यचिदभावात् तदपेक्षार्थत्वमशक्यशङ्कमिति परास्तम्। यथा च विंशतिलक्षण्या एकशास्त्रत्वाभ्युपगमेऽपि न दोषस्तथोपपादितं **परिमले**।

**निबन्धे** तु अथशब्दस्यापेक्षितपूर्वप्रकृतवाचित्वं भाष्ये शङ्कितम्। तथाच तस्यानन्तर्यसंबन्धेन जिज्ञासान्वयस्य वाच्यतया आनन्तर्यस्य संसर्गत्वे प्रकारत्वे वा न विशेष इति भाष्याभिप्रायमाश्रित्य किं शब्दो नित्योऽथानित्य इत्यत्रापेक्षितपूर्वप्रकृतशब्दवाचित्वमुपदर्शितम्। इयांस्तु विशेषः—सौत्राथशब्दार्थस्य भेदसंबन्धेन जिज्ञासान्वयः। अथानित्य इत्यत्र च तदर्थस्यैव धर्मितया तत्राभेदसंबन्धेन नित्यादिपदार्थान्वय इति। उतादिशब्दानामप्यपेक्षितपूर्वप्रकृतवाचित्वमिष्टमेव। कृदभिहितन्यायेन पूर्वप्रकृतापेक्षापदस्यापेक्षितपूर्वप्रकृतवाचित्वमप्यविरुद्धमेव।

**विवरणे** तु—यतः कुतश्चित्पूर्वप्रकृतादर्थान्तरत्ववर्णनमनुपयुक्तम्। पुष्कलकारणाच्चेदानन्तर्याभिधानं विनाकारणत्वासिद्धिः आनन्तर्याभिधाने च प्रकृतादर्थान्तरत्वस्यान्तर्नीततया सिद्धिरिति। ननु—प्रक्रियमाणादित्यादिना टीकाभिप्रायो वर्णितः। न चानन्तर्याभिधाने तदनभिधानेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धेस्तुल्यतया प्रकृतादर्थान्तरपरत्वपरित्यागे नोक्तबीजसंभव इति वाच्यम्। यत आनन्तर्यं न तदव्यवहितोत्तरक्षणवृत्तित्वमात्रं ज्येष्ठभ्राता कनिष्ठस्यानन्तर इत्यादिव्यवहारापत्तेः। किं तु तदव्यहितोत्तरक्षणोत्पत्तिकत्वम्।

एवं च धनं लभते अथ सुखी भवतीत्यादाविव असति बाधके आनन्तर्यघटितोत्पत्तावानन्तर्यप्रतियोगितावच्छेदकावच्छिन्नप्रयोज्यत्वप्रतीतेः व्युत्पत्तिबललभ्यतया आनन्तर्यार्थकत्वोप-

गमे विचारप्रवृत्त्युत्पत्तिप्रयोजकतावच्छेदकत्वस्य साधनचतुष्टयत्वे सुग्रहतया तादृशधर्मवत्त्वरूप-तदीयपुष्कलकारणत्वं साधनचतुष्टये सुग्रहमिति । भवति च तदप्रयोज्यात्तदानन्तर्यात्तत्प्रयोज्यं तन्मुख्यम् ।

न चात्र मुख्यत्वममुख्यत्वं वा वृत्तिनिबन्धनमुक्तमपि तु स्वभावनिबन्धनम् । यथा हि गुणपदस्य तुरगादिगतशीघ्रगमनमात्रवृत्त्यविशेषेपि अत्यन्तशीघ्रगमनस्य शीघ्रगमनान्मुख्यत्वम् । एवं विधो मुख्यगौणभावः परेषामप्यनुमतः । कारणादानन्तर्यं मुख्यमप्यव्यवधेरव्यभिचाराच्चेति विवरणे बाधकासत्त्वप्रदर्शनायाप्यव्यवधिरव्यभिचारश्चोक्तः । यादृशसमुदायत्वावच्छिन्नात्कार्योत्पत्तिः व्यवहिता व्यभिचरिता च तादृशसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतावच्छेदकत्वायोगादिति । प्रकृतार्थात् अर्थान्तरपरत्वे च न व्युत्पत्तिबलात् उक्तार्थलाभ इति । एतेनार्थान्तरानन्तर्यार्थत्वेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वं सिध्यति । अन्यथा आनन्तर्यार्थत्वेऽपि तत्प्रतियोगिनः तदसिद्धेः ।

ननु—कारणादानन्तर्यं मुख्यमव्यवधेरव्यभिचाराच्चेति तदेवाथशब्दवाच्यमिति चेन्न । अव्यवधेरकारणादानन्तर्येऽपि संभवात् अव्यभिचरितत्वं च न मुख्यत्वे हेतुः चैत्रो गतोऽनन्तरमेव मैत्रः समागतः इत्यादावमुख्यत्वाभिमानाभावादनन्यथासिद्धनियतानन्तरभावित्वादिरूपे कार्यलक्षणादौ नियतपदानर्थक्यप्रसङ्गाच्च । कारणस्य प्रकृतत्वं मुख्यमित्यपि सुवचत्वाच्च । एतेन पूर्वप्रकृतादर्थान्तरपरत्वेऽप्यानन्तर्यस्य तदन्तर्गततया सिद्धेश्चेति मन्दप्रलपितं परास्तम् । पूर्वप्रकृतादर्थान्तरपरत्वस्याकारणसाधारण्येनानन्तर्यसिध्ययोगाच्च, कारणगतप्रकृततायाः मुख्यत्वे हेत्वभावाच्चेति । कर्मविचारानन्तर्यादि यथा न प्रकृते विवक्षितम् तथाऽऽकरेषु द्रष्टव्यम् ।

"**उच्यते नित्यानित्यवस्तु विवेकः**" **इति** भाष्यम् । अथ कोऽयं नित्यानित्यवस्तु विवेकःतत्र तावत् ब्रह्मैव नित्यं अन्यदनित्यमिति विवेकः स इति । न, ज्ञातव्यस्य प्रागेव ज्ञाततया विचारवैफल्यात् । न च सगुणनिर्गुणविवेकाखण्डसमन्वयाद्यर्थं शास्त्रमिति युक्तम् । निबन्धे नित्यानित्यशब्दयोः सत्त्वासत्त्वपरत्वेनोक्ततया ब्रह्मैव सत्यमन्यदनृतमिति विवेकस्य प्रागेव सिद्धौ तदर्थस्य सगुणनिर्गुणविवेकादेरप्यनपेक्षितत्वात् । न च श्रुतितात्पर्यधीः स्वरूपेणापेक्षिता । किंतु ज्ञेयनिश्चायकतया । न चोक्तादन्यन्मुमुक्षुज्ञेयमस्ति । जीवब्रह्मभेदस्यापि ब्रह्मातिरिक्ततया तन्मिथ्यात्वस्य तदभेदस्यापि ब्रह्ममात्रतया तत्सत्यत्वस्यापि तेनैव निश्चितत्वाच्च । नाप्यात्मानात्मसमुदाये नित्यानित्यत्वे स्तो धर्मौ तयोश्च धर्मिभ्यां भवितव्यमिति निश्चयःसः, तन्मात्रेणानात्मप्रहाणेनात्मविचारे प्रवृत्त्ययोगात् ऐहिकामुष्मिकभोगविरागायोगाच्च । नाप्यस्य संसारस्य किंचिदधिष्ठानमस्तीति निश्चयः । ब्रह्मशब्दार्थत्वादेः प्रकारस्याज्ञानेऽपि वस्तुतो ब्रह्मणोऽनात्माधिष्ठानस्य शास्त्रवेद्यस्य ज्ञातत्वेन शास्त्रवैयर्थ्यात् । नापि ब्रह्मज्ञानफलमध्वंसि कर्मफलंतु प्रध्वंसीति निश्चयः सः । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगिनोऽनात्मनो ध्वंसप्रतियोगित्वायोगात् । पारमार्थिकत्वाकारणात्यन्ताभावः । स्वरूपेण तु ध्वंस इति चेन्न । पारमार्थिकत्वस्याबाध्यतारूपत्वेनान्योन्याश्रयात्

तेन रूपेणात्यन्ताभावप्रतियोगित्वस्य निराकारे ब्रह्मण्यपि संभवाच्च। अतात्त्विके रूप्यादावनित्यत्वव्यवहारायोगाच्च गौरनाद्यन्तवती एषोऽश्वत्थः सनातनः इत्यादिश्रुत्यनुसाराय मोक्षेऽस्यातात्त्विकी अनुवृत्तिः। निवृत्तिस्तु तात्त्विकी। मुक्तेः बन्धात् वैषम्यं तु तात्त्विकनिवृत्तिमत्तामात्रेणेत्यापाताच्च। किं च विवेको भेदस्य तद्व्यासस्य वा ज्ञानम्। तस्य भ्रमत्वे आत्मविचारो न नित्यफलकःस्यात्।

यत्तु ब्रह्ममीमांसाधिकारिविशेषणानां तत्साध्यत्वेऽन्योन्याश्रयः। न च आत्मज्ञानफलमेव नित्यमन्यदनित्यमिति विवेकः वैशेषिकादिशास्त्रान्तरात्। प्रथममेवाध्ययनविधिबद्धतया पुरुषस्य शास्त्रान्तरानवकाशात् तत्रोक्तनित्यानित्यवस्तुविवेकस्य वेदान्तविरुद्धत्वाच्च। नापीतिहासपुराणादिना, विचारात् प्रागेव तदनिश्चयात्। अन्यथा ब्रह्मनिश्चयोऽपि तेनैव स्यादिति। तन्न। "यत्त्वादौ श्रद्धया सिद्धं पुनर्न्यायेन साधित" मितिन्यायेन, अनित्यत्वात् सदुःखत्वात् धर्माद्यन्न परं सुखम्। मोक्ष एव परानन्दः संसारे परिवर्तताम्॥ इत्यादिनेतिहासादिना, 'नास्त्यकृतः कृतेने' त्यादिश्रुतित आपाततो वा श्रुतिमूलहितैषिपित्रादिवाक्येन वा श्रवणेन वा मननात्मकविचारात्प्रागपि श्रद्धामात्रेण नित्यानित्यवस्तुविवेकसिद्धेः। अन्यथा त्वन्मतेऽप्यपशूद्रमधिकारे ज्ञातेऽपशूद्रस्यैतच्छास्त्रप्रवृत्तिः। प्रवृत्तौ चैतच्छास्त्रेणापशूद्रमधिकारसिद्धिरित्यन्योन्याश्रयस्य दुर्वारत्वापत्तेः। तथाऽध्ययनविधावप्यधीते स्वाध्याये "अष्टवर्षं ब्राह्मणम्" इत्यादिवाक्येनाष्टवर्षादेरधिकारिविशेषणत्वज्ञानं तज्ज्ञानेचाध्ययने प्रवृत्तिरित्यन्योन्याश्रयोऽपि दुर्वारः। तथा ब्रह्मज्ञानस्यानन्तस्थिरफलत्वनिश्चये तदर्थिनो ब्रह्मविचारे निःशङ्कप्रवृत्तिर्विचारेण च तन्निश्चय इत्यन्योन्याश्रयः। फलज्ञानं संभावनात्मकमिति चेद् विवेकोऽपि तथास्तु।

यद्यपि त्वन्मते पूर्ववृत्तेन कर्मविचारेण कर्मणामल्पास्थिरफलत्वं निश्चितम्। तथापि न तन्निश्चय एव नित्यफलार्थिनो ब्रह्मविचारे प्रवृत्तिहेतुः भिन्नविषयत्वादतिप्रसङ्गाच्च। नापि कर्मणामल्पास्थिरफलत्वनिश्चयसहितो ब्रह्मज्ञानस्यापाततोऽनन्तस्थिरफलत्वसंदेहस्तद्धेतुः। अन्यस्यानुपायत्वेन ततो निवृत्तिमात्रसिद्धावपि तस्योपायत्वानिश्चये तदुपेयार्थिनस्तत्र निःशङ्कमप्रवृत्तेरिति चेन्मैवम्। त्वदुक्तरीत्या नित्यानित्यवस्तुविवेकस्य पूर्वं संभवात् उत्पन्नस्य तस्य दार्ढ्याय चासंभवस्तु सतोऽनुपपत्तेः, रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यामित्यादौ तन्निर्णायकन्यायग्रथनमविरुद्धम्। ब्रह्ममात्रस्याभेदसत्यत्वादेः पूर्वं ज्ञातत्वेऽपि यथा न शास्त्रारम्भवैयर्थ्यं तथोपपादितं प्राक्।

नन्वेवं नित्यानित्यवस्तुविवेक इत्यस्य यथाश्रुतार्थं परित्यज्य क्लेशेन सत्यानृतवस्तुविवेकार्थकतया व्याख्यानं **निबन्धकृता**मयुक्तम्। शंकासमाधानयोः पक्षद्वयेऽपि साम्यात्। यथाहि—**विवरणमते**—उक्तसूत्राणामनारम्भः तथा निबन्धमते तदनन्यत्वमारम्भणशब्दादिभ्यः इत्यादिसूत्राणामनारम्भोऽपि शङ्कितुं शक्यः। उक्तं समाधानं तुल्यमिति चेत्। अत्रोक्तम्—

**परिमले**—भाष्ये नित्यानित्यवस्तुविवेकानन्तरं नित्यफलप्रेप्सामनपेक्ष्य तद्विवेकमात्रेण कर्मफलविराग उक्तः। नित्यवस्तुप्रेप्सया तत्प्राप्त्युपायान्वेषणं पश्चादुक्तम्। अयं क्रमः अनित्यत्वमसत्यत्वमिति व्याख्याने युज्यते। न तु स्थायित्वमिति व्याख्याने। अस्थायि भोगं भुञ्जानः स्थायिभोगमालक्ष्य हि ततो विरज्यते। नान्यथा। अनृतासक्तस्तु तदनृतत्वनिश्चये सति तत्परित्यागेन तथाभूतसत्यवस्तुप्रतिसंधानाभावेऽपि ततो विरज्यते। न हि रजतार्थी क्वचन रजतभ्रमेण प्रवृत्तः तन्मिथ्यात्वनिश्चये सति तत्परित्यागेन सत्यरजतस्य स्वलभ्यत्वप्रतिसंधानाभावे न निवर्तते। किंतु निवृत्तः सत्यरजतप्राप्त्युपायं चेत् कंचित्पश्यति तत्र प्रवर्तते। तस्मान्नित्यानित्यवस्तुविवेकादिक्रमेण साधनचतुष्टयं ब्रह्मजिज्ञासाहेतुत्वेन वर्णयतो भाष्यकारस्य सत्यमिदं सुखरूपमित्यनिर्धारणेऽपि कर्मफलानृतत्वनिर्धारणमेव वैराग्यादिक्रमेण साधनान्तराणां प्रवर्तकमित्याशयमालोच्य निबन्धकल्पतर्वौ यथाश्रुतार्थोपेक्षणम्। निबन्धोक्तानुपपत्तिस्तु अभ्युच्चयमात्रम्। न तु विवक्षितेति। **विवरणे** तु नेत्थं भाष्याशयवर्णनं युक्तिमत्। यतः शुक्तिरूप्यादावनृतत्वज्ञानमात्रेण न तदुपादानात् निवृत्तिः। अपि तु तत्र प्रातिभासिकत्वेन अत्यन्तासत्वेन वास्येष्टकटकाद्यर्थक्रियासाधनत्वाभावाशक्योपादानत्वादिनिश्चयात्। न चानृतत्त्वेन घटादीनां निश्चितत्त्वेऽप्यर्थक्रियाकारित्वाभावस्तत्र निश्चितः। प्रत्यक्षादिविरोधात्। तुल्यन्यायेन शास्त्रतद्विचारादेरपि मिथ्यात्वेनार्थक्रियाकारित्वाद्यभावनिश्चयापत्त्या मोक्षार्थिनोऽपि तत्र प्रवृत्त्यभावप्रसङ्गाच्च। किं बहुना उक्तानिश्चयेन वैराग्योत्पत्तिरपि न स्यात्। घटादीनां प्रातिभासिकत्वं निश्चिन्वानश्च न प्रेक्षावान् भवेत्। अत एव स्वाप्निकपदार्थानामनृतत्त्वं निश्चिन्वाना अपि कल्याणकामिनः स्वाप्निकभोजनादिकमभिलषन्ति। कामिनोऽप्यलब्धकान्तासमागमाः स्वप्नेऽपि वा कान्तासमागमो भूयादित्यभिलषन्ति। प्रतिबिम्बासत्यत्त्वनिश्चयवन्तोऽपि हि स्वमुखगतमालिन्यादिविमर्शनाय तत्प्रतिबिम्बसंपत्तये दर्पणाद्युपाददत इति दिगिति यथाश्रुत एव वाक्यार्थ आदृतः। भाष्याभिप्रायश्चाग्रे निरूपयिष्यते। प्रतिपन्नोपाधिगतात्यन्ताभावप्रतियोगिनो ध्वंसप्रतियोगिता कुतो न युज्यते। किमत्यन्ताभावाधिकरणे ध्वंसायोगात् उतोक्तप्रतियोगिताया अत्यन्तासत्वरूपतया अत्यन्तासतश्च शशशृङ्गादेः ध्वंसादर्शनात्। नाद्यः प्रागभावध्वंसयोः अत्यन्ताभावविरोधित्वे प्रमाणाभावात्। स्पष्टं चेदमन्यत्र। न द्वितीयः, सद्विशेषस्यात्मनो नाशादर्शनवदसद्विशेषे तददर्शनस्याकिंचित्करत्वात्। पारमार्थिकत्वावच्छिन्नमुक्तप्रतियोगित्वं मिथ्यात्वमित्यत्रान्योन्याश्रयतोक्तिरपि न सत्। अबाध्यं सर्वं प्रमेयमित्याकारकवाक्यतात्पर्यविषयधीव्यक्तेस्तद्विषयताया वा पारमार्थिकत्वशब्देन विवक्षितायाः तद्व्यक्तित्वेनैवाभावप्रतियोगितावच्छेदकतया लक्षणे निवेश्यत्वेनान्योन्याश्रयानवकाशात्। त्वया मया च तादृशवाक्यतात्पर्यविषयधीव्यक्तेरवश्याभ्युपेयत्वात्।

इयांस्तु विशेषः—मन्मते ज्ञानानिवर्त्यत्वादिरूपमबाध्यत्वं तत्र विषयः। त्वन्मते चात्यन्ताभावाप्रतियोगित्वरूपमिति ब्रह्मण्यपि तादृशज्ञानविषयत्वमस्त्येवेति नोक्तातिप्रसङ्गः। समानाधिकरणधर्मावच्छिन्नाभावस्य स्वप्रतियोगिसामानाधिकरण्यानुपगमपक्ष एवैतादृशरीत्याश्रयणात्। अता-

त्विके रूप्यादावपि त्वदुक्तरीत्यात्यन्तासत्वासंभवे नित्यताव्यवहारः कथमपि वारयितुमशक्य एव। स्पष्टीभवति चेदमुपरिष्टात्। गौरनाद्यन्तवतीति श्रुतिश्च नास्मत्प्रतिकूला; अनादिश्चासावन्तवतीति चेति तदर्थात्। अन्यथा मतुप्प्रत्ययवैयर्थ्यापत्तेः। 'एषोऽश्वत्थः सनातनः' इत्यत्र मुक्तिकालातिरिक्तनिखिलकालसंबन्ध एवोच्यते। "अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा" इत्यादिबलवच्छास्त्रानुरोधात्। नित्यानित्यवस्तुविवेकश्च—ब्रह्मज्ञानफलं नित्यं कर्मफलसामान्यनित्यमिति निश्चयः। अत्रानित्यत्वं ध्वंसप्रतियोगित्वं नित्यत्वं तद्वदन्योन्याभावः। एतादृशनिश्चययोः परमार्थसन्मात्रविषयकत्वलक्षणप्रामाण्याभावेऽपि घटादिज्ञानप्रामाण्यसमकक्ष्यं व्यावहारिकं प्रामाण्यमस्त्येव। नच बाध्यविषयकत्वलक्षणाप्रामाण्याभ्युपगमेन विषयबाधस्यावश्यवाच्यत्वादनित्यत्वादिरूपविषयबाधे नित्यत्वापत्तिरिति वाच्यम्। यतो यदि अनित्यत्वादेर्बाधितत्वं तदधिकरणस्यानित्यतां विना नोपपद्येत तदैवायं दोषः प्रसज्यते तदेव तु नास्ति। नित्यत्वात्यन्ताभावादितोऽतिरिक्तस्य तदव्यापकस्यैव ध्वंसप्रतियोगित्वादिरूपानित्यत्वस्य यथाप्रमाणमुपगमात्। अनयैव च दिशा नित्यत्वेऽप्यूह्यम्। एवं निबन्धानुसारिणोऽपि।

स्यादेतत्। एवमपीहामुत्रफलभोगविरागो नोपपद्यते। **विवरणे** विषयादिभिरपि नित्यमात्मस्वरूपमेव सुखमभिव्यज्यते। न तु जन्यं सुखमस्तीत्युक्तत्वेन वैषयिकसुखेऽपि विरागायोगात् मोक्षे रागवतस्तत्त्वतस्ततो भेदहीने भोगे विरागायोगाच्च। तत्त्वतो भेदहीनत्वेऽपि तदभेदहीनत्वमात्रेण विराग इति चेन्न। उभयाभावस्य व्याहतत्वात्। दृश्यते चापारमार्थिकस्यापिनेदं रूप्यमिति शुक्तिधर्मिकलौकिकपारमार्थिकभेदप्रतियोगित्वमिति चेन्मैवम्। विवरणमते विषयसुखस्य ब्रह्मानन्दरूपतोपगमेपि तस्यानभिव्यक्तस्यापुरुषार्थतया पुरुषार्थतया काम्यमानायाश्च विषयाधीनतदभिव्यक्तेरनित्यतया ततो विरागे बाधकाभावात्। कर्माधीनसुखाभिव्यक्तिः स्वोत्तरावरणनियता; शास्त्राधीनब्रह्मानन्दाभिव्यक्तौ तु न पुनरावरणान्तरसंभव इति कर्माधीनसुखाभिव्यक्तिसामान्यं सुखावृतिमत्पूर्वकालावृत्तिः ब्रह्मविचाराधीना। सा च न तथेति विवेक एव नित्यानित्यवस्तुविवेक इत्येव तन्मतेऽनुसंधेयमिति तु **नव्याः**।

यत्तु वैषयिकसुखादेरतिरिक्तत्वेऽपि दूषणमुक्तम्। तदसत्। वैषयिकसुखस्य ब्रह्मानन्दप्रतियोगिकतात्त्विकभेदशून्यत्वेऽप्यनित्यताया दुरपह्नवतया वैराग्ये बाधकाभावात्। नित्यात्तत्त्वतो भेदशून्यस्यानित्यत्वमेव दुर्घटमिति चेन्न। मां प्रति प्रतिबन्धासिद्धेः। न च यो यदीयतात्त्विकभेदशून्यः स तन्निष्ठस्वाधिकसत्ताकभेदप्रतियोगी यथा शुक्तिरजतं शुक्तिप्रतियोगिकतात्त्विकभेदशून्यं तन्निष्ठस्वाधिकसत्ताकभेदप्रतियोगीति नियमात् ब्रह्मणि वियदादिभेदस्य तात्त्विकस्योपगममन्तरा न वियदादेः तात्त्विकब्रह्मभेदशून्यत्वसिद्धिरिति वाच्यम्। त्वन्मते सत्तायामवान्तरभेदाभावेनोक्तव्याप्त्यसिद्धिः। मन्मते च तात्त्विकशुक्तिब्रह्मादिभेदशून्ये रजतादौ साध्याभावेन व्यभिचारादप्रयोजकत्वाच्च। तस्मायुक्त इहामुत्रफलभोगविरागः।

यत्तु—शमादिसंपदित्यत्र आदिशब्दो न युक्तः। तेन तितिक्षादेरेव ग्रहणं न तु विवेकादेरिति नियमहेतोस्तितिक्षाद्यनुगतस्य विवेकादिव्यावृत्तस्य चोपसंग्राहकधर्मस्याभावादिति। तन्न। "शान्तो दान्त" इत्यादिवाक्योपात्तकर्तृविशेषणत्वरूपानुगताननतिप्रसक्तधर्मसौलभ्यात्।

अथैवमपि न भवन्मते मुमुक्षोपपद्यते। सा हि किमहं मुक्तः स्यामितीच्छा, किं वा चिन्मात्रं मुक्तं स्यादिति। नाद्यः त्वन्मतेऽहमर्थस्य मुक्त्यनन्वयात्। न द्वितीयः, जातेष्ट्यधिकारिणः पितुः पुत्रस्य स्वार्थत्वात्पुत्रः पूतः स्यादितीच्छासंभवेऽपि चिन्मात्रस्येच्छाश्रयाहमर्थार्थत्वाभावेन तादृशेच्छाया अदर्शनेन, विपरीतेच्छाया एव च दर्शनेन ज्ञानस्य निष्फलत्वापातादिति चेन्न। अहं मुक्तः स्यामितीच्छाया एव मुमुक्षात्वात्। न चोक्तदोषः तादृशेच्छोपलक्षितचिदंशस्य मुक्त्यन्वयोपगमात्। स्वाभाविककर्तृत्वाश्रयस्याहंप्रत्यये भासमानस्यैवाचिदंशस्यानात्मत्वोपगमात्। विशिष्टधर्माणामपि केषांचिद्यथाप्रमाणं विशेष्यगतत्वोपगमाच्च।

यच्च मोक्षस्य नित्यसिद्धात्ममात्रत्वेन तत्रेच्छा न युक्तेति। तन्न। पूर्णानन्दस्य स्वरूपतो नित्यत्वावगमेऽपि दुःखनियततदावरणविद्वेषात् तद्विरोधिन्यां तदभिव्यक्तौ तत्साक्षात्कारप्रमायां वेच्छासंभवेन तादृशेच्छाया एव मुमुक्षाशब्दार्थत्वोपगमात्। तादृशप्रमाया अनित्यत्वेऽपि तदभिव्यक्तानन्दस्य नित्यतया ब्रह्मविचारस्य न नित्यफलकत्वविरोधः। अन्येच्छानधीनेच्छाविषयस्यैव अन्येच्छानधीनेच्छाविषयसाक्षात्कारगोचरस्यापि पुरुषार्थत्वात्। अन्यथा परस्याप्यभिव्यक्तः स्वरूपानन्दः पुरुषार्थो न स्यात्। आवरणध्वंसस्य पुरुषार्थत्वं तु न तवेष्टम्। आनन्दसाक्षात्कारोऽपि स्वरूपभूतो न जन्यः विशेषाभ्युपगमोत्प्रेक्षितं कुचोद्यं तु परतो निराकरिष्यते।

**अतः शब्दो हेत्वर्थ** इत्यादि**भाष्यम्**। अत्रोक्तं **निबन्धे**—सत्यं यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा भवति। सैव त्वनुपपन्ना। इहामुत्रफलभोगविरागस्यानुपपत्तेः। अनुकूलवेदनीयं हि फलमिष्टलक्षणत्वात् फलस्य। न चानुरागहेतावस्य वैराग्यं भवितुमर्हति। दुःखानुषङ्गदर्शनात् सुखेऽपि वैराग्यमिति चेत् हन्त भोः सुखानुषङ्गात् दुःखेपि रागो न कस्माद्भवति। तस्मात् सुख उपादीयमाने दुःखपरिहारे प्रयतितव्यम्। अवर्जनीयतया दुःखमागतं परिहृत्य सुखमात्रं भोक्ष्यते। तद्यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादाय यावदादेयं तावदादाय निवर्तते तस्मात् दुःखभयान्नानुकूलवेदनीयमैहिकमामुष्मिकं वा सुखं परित्यक्तुमुचितम्। नहि मृगाः सन्तीति शालयो नोप्यन्ते। न वा भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। अपि च दृष्टं सुखं चन्दनवनितादिसङ्गजं क्षयितालक्षणेन दुःखेनाघ्रातत्वात् अतिभीरुणा त्यज्येतापि। नामुष्मिकं स्वर्गादिकं, तस्याविनाशित्वात् श्रूयते हि—अपाम सोमम् अमृता अभूम "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति। न च कृतकत्वहेतुकविनाशित्वानुमानमत्र संभवति। नरशिरः कपालशौचानुमानवदागमबाधितत्वात्। तस्माद्यथोक्तसाधनसंपत्त्यभावान्न ब्रह्मजिज्ञासा संभवतीत्याशङ्क्याह **भगवान् सूत्रकारः—अत इति**। तस्यार्थं व्याचष्टे भाष्यकारः—**यस्माद्वेद एवेत्यादिना**। अयमभिसंधिः—**मृगभिक्षुकादयः**

शक्या: परिहर्तुं पाचककृषीवलादिभि:, दु:खं त्वनेकविधकारणसंपातजमशक्यपरिहारमन्तत: साधनपारतन्त्र्यक्षयितालक्षणयो: दु:खयो: समस्तकृतकसुखाविनाभावनियमात्। नहि मधुविषसंपृक्तमन्नं विषं परित्यज्य शक्यं शिल्पिवरेणापि भोक्तुम्। क्षयितानुमानोद्दलितं च तद्यथेत्यादिवचनं अक्षयिताप्रतिपादकं अपाम सोममिति वचनं मुख्यासंभवे जघन्यवृत्तिमापादयति। यथाहु: पौराणिका:—अभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति। अत्र हि ब्रह्मपदेन तत्प्रमाणं वेद उपस्थापित:। स च योग्यत्वात् तद्यथेत्यादिरत इति सर्वनाम्ना हेतुपञ्चम्यन्तेन निर्दिश्यत इति। न चात्र हेतोर्विचारकर्तव्यतारूपसाध्यान्वयत्यागेन विरागादिसाधनान्वयायोग:; अथशब्दार्थैकदेशे विरागेऽत: शब्दोक्तहेत्वन्वयायोगश्चेति वाच्यम्। निबन्धकारमते—जिज्ञासापदावयवार्थज्ञानेच्छाया अपि विवक्षितत्वेन पञ्चम्यर्थप्रयोज्यताया: तदन्वयस्यापि युक्तत्वात्। प्रयोज्यतापरं सामर्थ्यादुक्तसाधनसंपत्तिद्वारिका विवक्षितेति न दोष:।

यदुक्तमथशब्दोपस्थापितेन विरागेणैव स्वजनकस्य तद्यथेहेत्यादेर्वाक्यस्य साक्षादेवोपस्थापनसंभवे ब्रह्मशब्देन परंपरयोपस्थापनोक्तययुक्ति:। विरागहेतुत्वेन त्वदभिमनसत्यानृतविवेके 'नेहनाना' इत्यादेरेव हेतुत्वेन वक्तव्यतया 'तद्यथेह' इत्याद्युक्त्ययुक्तिश्चेति। तदसत्। ब्रह्मपदसमभिव्याहृतजिज्ञासापदेनावश्यापेक्षणीयब्रह्मप्रमाणभूतवेदान्तविचारवटकतया वेदान्तोपस्थिति: तद्विशेषोपस्थितिश्च अथशब्दोपस्थितनित्यानित्यवस्तुविवेकाधीनवैराग्यादिति सामान्यविशेषरूपाभ्यां तद्वाक्योपस्थितिकथनपरस्य ब्रह्मशब्देन तत्प्रमाणं वेद: स च योग्यत्वात् तद्यथेह—इत्यादिनिबन्धस्यासंगत्यभावदिं।

अत्र चादिशब्देन भाष्योपात्तो ब्रह्मविदाप्नोति परमिति वेदभागोऽपि विवक्षित:। साक्षात्तदुपस्थापकत्वं ब्रह्मण: एव। न विरागादे:। तथापि विनिगमनाविरह: सुस्थ एवेति चेन्न। मुख्यामुख्यवृत्त्योरेव तथात्वात्। साक्षात्परंपरया वा सर्ववेदानां ब्रह्मपरत्ववत्तेषां तथा विरागपरत्वाभावाच्च। अत्र नित्यानित्यवस्तुविवेकप्रतिपादनं यथोपपन्नं तथोपपादितं **पूर्वोदाहृतपरिमलगन्थ** इति सर्वमनवद्यम्॥

**पञ्चपादिकायां** तु—स्यादेतत्। कृतकत्वपरिच्छेदौ नैकान्तत: क्षयितां गमयत: परमाणुषु पाकजलौहित्यस्य कृतकस्य तेषां च परिच्छिन्नानां नित्यत्वाभ्युपगमात्। वेदेऽपि 'अक्षय्यं ह वै चातुर्मास्ययाजिन: सुकृतं भवति' इत्यादिना पुण्यफलस्य अक्षय्यत्वश्रवणात्। अतो न विषयभोगाद् विराग:। विरागिणामपि न कूटस्थनित्यवस्त्ववष्टम्भेन मुमुक्षुत्वं, ततश्च न शमादिपरिग्रहो यतो न तेन भोक्तुस्तादात्म्यं संभाव्यते। नापि तदवाप्तिर्दु:खाभावेऽपि सुखभोगाभावात् अनवद्यपुरुषार्थ:। अतोऽजीर्णभयात् न आहारपरित्याग:, भिक्षुभयात् न स्थाल्यनधिश्रयणं दोषेषु प्रतिविधातव्यमिति न्यायात्। अतो न तस्य ब्रह्मजिज्ञासायां हेतुत्वमिति। अतस्तस्य हेतुत्वप्रदर्शनार्थ: अत: शब्द:।

कथम्। यस्माद्वेद एव अग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति-'तद्यथेहे' त्यादिना। ननु पुण्यस्य अक्षय्यफलत्वमपि वेद एवाहेत्युक्तम्। न; तस्य वस्तुबलप्रवृत्तानुमानविरोधेऽर्थवादस्य नित्यत्वप्रतिपादनासामर्थ्यात्। परमाणूनां पाकजन्यतद्गुणस्य चानित्यत्वात् अतो भवत्यनित्यत्वदर्शनं विषयभोगानां मुमुक्षुत्वहेतुः। यत्पुनर्मुमुक्षुत्वाभावे निमित्तमुक्तं तत्राह—**तथा ब्रह्मज्ञानादपीत्यादीति।**

**विवरणे**ऽपि नन्वथशब्द एवानन्तर्याभिधानमुखेन हेतुतया पूर्ववृत्तमर्थं गमयतीत्युक्तम्। ननु हेतुत्वमार्थिकं असति बाधके व्युत्पत्तिबललभ्यं नाभिधेयं न वाच्यकोटिप्रविष्टमथशब्दस्या सत्यम्। आर्थिकार्थे तात्पर्यादानन्तर्यमात्रे वैफल्यात्। यत्परः शब्दः स शब्दार्थः इति न्यायादिति अथशब्देनैव हेतुत्वसिद्धेः नातः शब्दोऽपेक्ष्यते। धर्ममीमांसायां सत्यप्यथशब्दे अतः शब्देनापि तस्य हेतुत्वमुक्तमिति चेत् अन्धगोलांगूलैकशरण्योऽयं **सर्वसंकरवादी।** तस्मात् अतःशब्दवैयर्थ्यमिति प्राप्तम्। अत्राथशब्दपरिगृहीतस्यैव हेतुत्वस्य हेत्वन्तरेणापवादशङ्कायां पुनरथशब्दोक्तहेत्वभिधायिना अतः शब्देन तन्निराकरणं क्रियत इति दर्शितं यस्मादित्यादिभाष्येण। तत्र तामाशङ्कां दर्शयति—

**"स्यादेतत्—कृतकत्वपरिच्छेदौ" इत्यादि**ना। इति पञ्चपादिकास्थशङ्काग्रन्थोऽवतारितः। न चात्राथशब्दोक्तानधिकाभिधायिना अतः शब्देनापवादशङ्कानिरासे अथशब्देनैव तन्निरासप्रसङ्गः। हेतुत्वसाधकहेतोः कथनेन ह्यपवादशङ्कानिरासः। न तूक्तस्यैव हेतुत्वस्य पदान्तरेण कथनमिति वाच्यम्। अथशब्दोक्तहेत्वभिधायिनेति **विवरण**वाक्यार्थाङ्गीकारात्। एवं तस्य हेतुत्वप्रदर्शनार्थ इति **टीकायामपि** प्रकर्षवाच्युपसंधानेन प्रदर्शनपदं दृढीकरणार्थमिति बोध्यम्। व्यर्थं सत्किंचित्ज्ञापयतीतिन्यायेन तदुपयोग इति ऋजवः। एवं च सौत्राभ्यामथातः शब्दाभ्यामधिकारस्य ब्रह्मजिज्ञासाशब्दाभ्यां विषयप्रयोजनयोः पदचतुष्टयेन च संबन्धस्य च सूचनात् नोत्सूत्रसिद्धान्तता। ब्रह्मणि जिज्ञासाविषयत्वकथनेन तद्व्यापकस्य संदिग्धत्वरूपविषयत्वस्य इष्यमाणत्वकथनेन च मोक्षब्रह्मज्ञानयोः फलत्वस्य ज्ञानेच्छाद्वारा मुमुक्षाप्रयोज्योत्पत्तिककृतिसाध्यताया विचारे प्रतिपादनात् मुमुक्षाया ज्ञानेच्छाया वाऽधिकारत्वस्य; एवं शमादीनामप्यथशब्देन तस्य वेदान्तानां ब्रह्मपरत्वनिर्णयानुकूलन्यायानुसंधानरूपविचारलक्षकेन जिज्ञासापदेन यथायोगं प्रतिपाद्यप्रतिपादकभावादिरूपसंबन्धस्य च प्रत्यायनात् संदिग्धत्वनिर्वाहकहेतुश्च जीवब्रह्मैक्यशुद्धत्वादिगमकापरिच्छिन्नत्ववद्वस्तुवाचकेन ब्रह्मपदेन सूच्यते।

इयांस्तु विशेषः—निबन्धमते आर्थिकी विचारकर्तव्यता। मतान्तरे तु शाब्दी। जिज्ञासादिकं तु मतद्वयेऽपि शाब्दं; **विवरण**रीत्यापीष्यमाणज्ञानानुकूलविचारत्वेनैव विचारे लक्षणोपगमात्।

**एतेन** निश्चिते जिज्ञासाया अयोगात्संदिग्धत्वेनैव ब्रह्म विषयः; ज्ञानादिकमेवेच्छाविषयत्वेन प्रयोजनमिति जिज्ञासापदेनैव विषयप्रयोजने सूचिते इति न युक्तम्। पूर्वपक्षिणा ब्रह्मजिज्ञासाया अङ्गी-कृत्यानाक्षेपात्। विषयाद्यभावेनेच्छैव न संभवतीति हि तस्याभिप्रायः। न च तं प्रतीच्छया विष-यादिसाधनमुपपत्तिमत्। एवं विवरणकृन्मते जिज्ञासापदस्य विचारलक्षकत्वेन जिज्ञासापदस्य ज्ञानेच्छापरत्वाभावाच्च। न हि विषं बुभुक्षते कूलं पिपतिषतीत्यनेन विषभक्षणादेरिष्टत्वादिसिद्धिः प्रतीतस्यापि मुख्यार्थस्य त्यक्तत्वात्। पूर्वपक्षिणा इच्छाया अनङ्गीकाराच्च, तन्मते ज्ञानेच्छाया असं-भवस्योक्तत्वाच्च। मुमुक्षाया अधिकारिविशेषणत्वनिरासाच्च विषयसूचनं त्वसंदिग्धत्वस्य सूचनं विना न शक्यम्। अन्यथा शास्त्रारम्भसामर्थ्यात् कर्तव्यतोक्तिसामर्थ्यादेव वा तत्प्रयोजकविषयादिसूचन-संभवात् जिज्ञासापदादिना तत्सूचनोक्तेरयुक्तता स्यादिति **परास्तम्**। ज्ञानेच्छासंभवादेरपि प्रागु-पदर्शितत्वाच्च।

**अथैवमप्यपरिच्छिन्नवाचिना** ब्रह्मशब्देन कथं ब्रह्मात्मैक्यसिद्धिः। ब्रह्मणो जीवाद्भेदे तद्रूपविकलत्वेनाल्पत्वापत्त्या त्रिविधपरिच्छेदाभावरूपमहत्वासिद्धिप्रसङ्गेन तत्सिद्धिरिति तु न विचार-सहम्। तथा सति तुल्यन्यायेन ब्रह्मघटयोरप्यैक्यप्रसङ्गात्। जीवस्वरूपस्य मोक्षान्वयितया तात्वि-कत्वात् घटादेश्चातथात्वात् वैषम्यमिति चेन्न। देशकालयोरतात्विकत्वेऽपि गगनादाविव घटादौ तात्विकस्य वा घटादितुल्यसद्रूपस्य वा देशापरिच्छेदस्याभावेनाल्पत्ववदभेदस्यापि अपरिच्छेदरूपत्वे वस्तुनो घटादेरतात्विकत्वेऽपि ब्रह्मणि तात्विकस्य स्वतुल्यसद्रूपस्य वास्तववस्त्वपरिच्छेदस्याभावेनाल्पत्व-प्रसङ्गात्। न च परिच्छेदकस्य देशादेः घटतुल्यसद्रूपकत्वात् घटादेर्देशतोऽल्पता। ब्रह्मणि तु परिच्छेदकस्य वस्तुनो घटादेः स्वतुल्यसद्रूपत्वाभावात् तदभेदाभावेऽपि न वस्तुतोऽल्पता। जीव-स्यतूक्तयुक्त्या ब्रह्मतुल्यसद्रूपत्वात् तदभेदाभावे वस्तुतोऽल्पता स्यादिति वाच्यम्। तत्त्वतः सद्रूपे ब्रह्मणि व्यवहारतः सद्रूपदेशादिना परिच्छेदेऽपि महत्वासिद्धिप्रसङ्गात् स्वतुल्यसद्रूप-घटाद्यनात्मकेऽपि गगनादावल्पत्वबुद्ध्यभावाच्च। अन्यथा कालपरिच्छिन्नेऽपि परमाण्वादौ भेद-मात्रेण परिच्छिन्नत्वबुद्धिः स्यात्।

ननु घटादौ स्वतुल्यसद्रूपदेशादिपरिच्छेदोऽल्पत्वं ब्रह्मणि तु घटादिप्रतियोगिको भेदो न स्वतुल्यसद्रूप इति नाल्पत्वमिति चेत्। मैवं। तथात्वे घटादिवज्जीवादपि स्वतुल्यसद्रूपभेदा-भावमात्रेण महत्वासिद्ध्या जीवाभेदासिद्धिः। गगनादौ स्वतुल्यसद्रूपदेशापरिच्छेदो महत्वम्। न च ब्रह्मणि घटादिप्रतियोगिको भेदरूपः परिच्छेदः तथेति महत्वहानिप्रसङ्गाच्च। न च स्वतुल्यसद्रूपस्यापरिच्छेदस्याभावे तादृशपरिच्छेदः स्यादेव। तात्विकस्यातात्विकादपि स्वतुल्य-सद्रूपभेदस्य नेदं रूप्यमिति दर्शनात्। तस्माद् ब्रह्मणो जगतो व्यावृत्तिमपरिच्छिन्नतां चाभि-लषता भेदस्य परिच्छेदत्वैव त्याज्या परिच्छिन्नात् भेदेनापरिच्छिन्नस्यैव सिद्धेः। किं च निरङ्कुश-महत्वार्थं ब्रह्मणः सर्वात्मकत्वे अल्पदेशादधिकदेशे अल्पगुणादधिकगुणे च महत्वबुद्धिवदेकात्मकात् गगनादनेकात्मकराश्यादौ महत्वबुद्धिः स्यात्। अवयवानेकत्वेऽपि परिमाणोत्कर्षादेव महत्वं निबि-डानेकावयवादयःपिण्डादावपि विरलाल्पावयवे तूलराश्यादौ महत्वव्यवहारात्। किं चापरिच्छेदस्य

ब्रह्मानन्यत्वे बृहतिधात्वर्थस्य भावेऽपि प्रत्ययार्थाभावेन अपरिच्छिन्नत्वासिद्धिः। अन्यत्वेऽपि सुतरां तात्त्विकत्वे तद्रूपविकल्पनात् अतात्त्विकत्वे तत्त्वतः परिच्छिन्नत्वापत्तिः। किं च वस्तुतोऽल्पे सत्येव तन्निरूपितमहत्त्वस्य वास्तत्वमिति ब्रह्मशब्दादेव सद्वितीयत्वं देशाद्यवच्छेदोऽपि न देशादेः वस्तुतोऽभावहेतुः। घटादेरपि तत्प्रसङ्गात् देशादेः सत्त्वेऽपि तत्परिच्छेदाभावमात्रेण तत्सिद्धेश्च बौद्धाभिमतक्षणिकविज्ञानादेरपि वस्तुतः कालाद्यभावेन अपरिच्छिन्नत्वप्रसङ्गाच्चेति चेत्। **नैवम्**। बृह बृहि वृद्धौ इत्यनुशासनात् बृहति बृंहयति तस्मादुच्यते ब्रह्मेत्यागमाच्च उत्कर्षरूपा वृद्धिः बृहत्यर्थः। तदाश्रयश्च ब्रह्मशब्दार्थ इत्यवगम्यते। अजाद्दजो महानित्यादाविव अवधिवाचकोपपदप्रकरणादिरूपसंकोचकप्रमाणाभावाच्च तस्या निरङ्कुशत्वमपि। एवं च देशतः कालतो वस्तुतो गुणतश्च अपरिच्छिन्नं ब्रह्मशब्दार्थोऽवगम्यते। तत्र कालतोऽल्पत्वम् कियतैव कालेन संबध्यमानत्वं कालिकसंबन्धावच्छिन्नाभावप्रतियोगित्वपर्यवसितम्। एवं देशतोऽल्पत्वं कियतैव देशेन संबध्यमानत्वं दिङ्निरूपितविशेषणतासंसर्गावच्छिन्नाभावप्रतियोगित्वपर्यवसितम्। तथा वस्तुतोऽल्पत्वं कियतैव वस्तुना संबध्यमानत्वं तादात्म्यसंसर्गावच्छिन्नाभावप्रतियोगित्वपर्यवसितम्। अतादृशत्वं चापरिच्छेदः। एवं च मोक्षान्वयितयाऽनारोपितमकार्यमनंशं च जैवं तात्त्विकं रूपं यदि परब्रह्मणः तत्त्वतो भिन्नं स्यात् तदा कार्यकारणरूपेणाधिष्ठानारोप्यतया अंशविशिष्टकेवलादिभावेन वा द्रव्ययोर्जीवब्रह्मणोः तादात्म्यायोगेन ब्रह्मणः जीवनिष्ठाभावीयतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताया दुर्वारतया परिच्छिन्नता प्रसज्येतेति जीवस्वरूपैक्यं सिध्यतीति। "वस्त्वन्तरसद्भावे हि तदपेक्षया एतावति सद्भावो नातः परमस्तीति स्यादेतस्माद्व्यावृत्तः इति। तदभावे न परिच्छिन्नबुद्धिर्भवति" इति **पञ्चपादिकाया** वस्त्वन्तरसद्भावे हीत्यस्य परिच्छिन्नत्वाभिमतासंसर्गिवस्त्वन्तरसद्भावे हीत्यर्थः। गुणापरिच्छेदश्च टीकाविवरणयोः स्पष्टः। तथा रूपान्तरसद्भावे तद्रूपविकलत्वात् तदवच्छेदकृतमल्पत्वं स्यात् तद्ब्रह्मपदादपास्यते इति पञ्चपादिकायामुक्तार्थः स्पष्टीकृतः। रूपान्तरसद्भावे तत्वतो ब्रह्मातिरिक्तरूपसत्वे तद्रूपविकलत्वात् तादात्म्येन तद्रूपासंसर्गित्वात् तदवछेदकृतमल्पत्वं तन्निष्ठाभावीयोक्तसंसर्गावच्छिन्नप्रतियोगित्वरूपमल्पत्वमिति हि तस्यार्थः।

**यत्तु** देशकालपरिच्छिन्नत्वयोः अतात्त्विकेऽपि गगनादाविव घटादौ तात्त्विकस्य वा स्वतुल्यसद्रूपस्य वा वस्त्वपरिच्छेदस्याभावे (सा) अल्पत्ववद्भेदस्यापरिच्छेदरूपत्वे वस्तुतो घटादेरतात्त्विकेऽपि ब्रह्मणि तात्त्विकस्य वा वस्त्वपरिच्छेदस्य अभावेनाल्पत्वप्रसङ्ग इति। **तन्न**। स्वसमानसत्ताकापरिच्छिन्नत्वाभावस्य अल्पत्वसहचारेपि तद्व्याप्यत्वासंप्रतिपत्तेः लघोः ब्रह्मज्ञानेतराबाधे परिछेदश्रुत्यातस्योपधित्वात्।

यदपि स्वतुल्यसद्रूपघटाद्यनात्मके गगनादौ अल्पत्वबुद्धिर्नास्तीति। तदपि न। परिमाणतो देशतश्चाल्पत्वबुद्ध्यभावे गगनादौ ब्रह्मणः सकाशादल्पवस्तुसंसर्गितारूपाल्पत्वस्य विप्रतिपन्नत्वायोगात् अन्यथा ज्ञानयोः परिमाणादिकृततारतम्याभावेऽपि अल्पविषयज्ञानादधिकविषयकज्ञाने महत्वाभावप्रसङ्गः। एवमेकात्मकात् गगनादनेकात्मके राश्यादौ अवयवतो महत्त्वबुद्धिरिष्टैव।

परंतु निरुपपदस्य महत्पदस्य देशतो गुणतश्च महत्त्वेव गोपदस्य पशुविशेष इव प्रचुरप्रयोगतया तस्मात् झटिति तादृशमहत्वप्रत्ययः। महत्वान्तरस्य त्ववगते तात्पर्ये उक्तोऽपरिच्छेदः अभावस्याधिकारणात्मकत्वमते ब्रह्मस्वरूपोऽपि कल्पितेन भेदेन सत्तादिवत् ब्रह्मधर्मोऽपि। मतान्तरे च ब्रह्मज्ञानाबाध्यः।

यत्तु—अल्पत्वस्य अतात्विकत्वमिव महत्वस्यातात्विकत्वमिति—तदयुक्तम्। अभावविशेषप्रतियोगित्वतदभावरूपयोः तयोः धर्मिसत्तासाम्यापेक्षायां प्रमाणाभावात्। अन्यथा त्वन्मते अत्यन्तासत्त्वतदभावयोरपि धर्मिसमसत्तासापेक्षत्वप्रसङ्गात्। कालसंबन्धत्वरूपसत्तामात्रेण ब्रह्मज्ञानातिरिक्तबाध्यत्वमात्रेण वा तदुपपत्तिश्च। अन्यत्तु नास्मदनभिप्रेतं दूष्यमाणं नः क्षतिकरमिति।

जिज्ञासाशब्दो ज्ञानेच्छायां यौगिकः विचारे निरूढलाक्षणिकः। यत्तु—

जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते।
विचारं लौकिकास्तेन तत्रायं रूढ इष्यते॥
अन्यथा मण्डपादीनां गृहादौ स्यान्निरूढता।
गङ्गाशब्दत्तु तीरादि तत्र पूर्वं प्रकाशते॥

तथापि जिज्ञासाशब्दादिवेच्छाप्रतीत्यभावे विचारः प्रतीयते। अन्यथा बुभुत्सापदादपि विलम्बेन प्रतीतिसंभवात् नियमेन जिज्ञासापदं न प्रयुज्येत। स्वीकृतश्च त्वयापि विचारसाध्यज्ञानेच्छा जिज्ञासाशब्दात्प्रतीयते नोपदेशमात्रसाध्यज्ञानविषयेति वदता विचारप्रतीतेरिच्छाप्रतीतिपूर्वकत्वाभावः। एवं च तद्विजिज्ञासस्व इत्यादौ अस्मिंश्च सूत्रे न विधौ लक्षणा। अन्यथा लोके मण्डपशब्दस्य मण्डपानकर्तृरूपयौगिकार्थसंबन्धात् गृहविशेषे, प्रवीणकुशलादिशब्दानां च प्रकृष्टवीणावादनादिगतप्रागल्भ्यगुणयोगादेव निपुणे वाजिशब्दस्य वाजशब्दवाच्यान्नसंबन्धादेवाश्वजातौ प्रयोगसंभवात् रूढिर्न स्यात्। वेदे च अपरिमितं देयमित्याधानप्रकरणे श्रुतस्य अपरिमितशब्दस्य परिमितान्यरूपमुख्यार्थनिष्ठानेकत्वरूपगुणयोगादेव बहुत्ववति प्रयोगसंभवात् रूढिर्न स्यात्। उक्ता च रूढिः षष्ठे। न च प्रवीणादिशब्दे इष्टापत्तिः। यौगिकार्थप्रतीत्यभावेऽपि नैपुण्यप्रतीतेः। न चैवं वैश्वदेवेन यजेत इत्यादौ वैश्वदेवीमामिक्षामिति वाक्यविहितयागे यौगिकवैश्वदेवशब्दस्य वैश्वदेवावैश्वदेवसमुदाये गङ्गापदादेश्च तीरादौ लक्षणा न स्यात् किन्तु रूढिरेव स्यादिति वाच्यम्। तत्र मुख्यार्थप्रतीतिपूर्वकमेवेतरप्रतीतेः। प्रकृते च तदभावादित्युक्तत्वात्। किं च त्वन्मते ज्ञानसामान्येच्छायाः काप्यभावादपरोक्षेच्छायां च जिज्ञासाशब्दस्यावयवशक्त्यभावात् समुदायशक्तेः कल्प्यत्वात् विशेषे विचारे समुदायशक्तिः। **तन्न।** यत्तु जिज्ञासाशब्दादिच्छाप्रतीतिं विना विचारप्रतीतेः जिज्ञासाशब्दो विचारे रूढ एवेति तदसत्। जिज्ञासाशब्दादिच्छाप्रतीतिं विना विचारप्रतीतेरसिद्धेः। अन्यथा निरूढलाक्षणिके सर्वत्रैव इत्थमाख्यातुं

शक्यतया निरूढलक्षणोच्छेदप्रसङ्गात् । उक्ता हि सा काव्यप्रकाशव्याख्यायां कुशलादिपदेषु कर्मणि कुशल इत्यादौ दर्भग्रहणायोगान्मुख्यार्थबाधे विवेचकत्वादौ संबन्धे रूढितः प्रसिद्धिरिति । काव्यप्रदीपेऽपि—रूढितो यथा—कर्मणि कुशल इत्यादौ । अत्र दर्भग्रहणायोग्यत्वान्मुख्यार्थबाधः विवेचकत्वं च सबन्धः । एवं त्वगादिपदानां चर्मादिवाचकानां त्वगिन्द्रियादावपीति । यद्यपि कैश्चिदालंकारिकादिभिः कुशललावण्यमण्डलादिपदेषु दक्षत्वादिकं प्रवृत्तिनिमित्तमवलम्ब्य अवयवार्थप्रतीतावपि तत्प्रतीतिं चोपेत्य रूढिरेवोपगता । तथापि यत्र प्रवृत्तिनिमित्तस्यावयवार्थे प्रयोगप्राचुर्याभावात् तस्य झटित्यप्रतीतेः बाधप्रतिसंधानं विनापि तत्प्रतीतेश्च तत्रैव रूढिशक्तिरुपगता । न त्वन्यत्रापि । यथोक्तं काव्यप्रदीपोद्योते—कुशलो लावण्यं मण्डपः कुण्डलमित्यादौ व्युत्पत्तिनिमित्तस्य झटित्यप्रतीतेः बाधप्रतिसंधानं विनापि तत्प्रतीतेश्च कुशैः कलच्इत्यादौ कुशलपदस्य साधनाच्च रूढिशक्तिरेवात्रेति केचित् । इत एवास्वरसादाह—**त्वगिति** । एवं तैलपदस्य तिलविकारद्रवे शक्तस्य सार्षपेऽपि निरूढलक्षणेति । क्वचिदवयवार्थाप्रतीतावपि तत्प्रतीतिरस्तीति तु गङ्गापदात् क्वचित्प्रवाहादिप्रतीतिं विनापि जायमानया तीरप्रतीत्या समाश्वास्यते । न कुशलमण्डपादिशब्देष्विव अत्रावयवार्थो मन्थरप्रवृत्तिकः । किंपदस्य जिज्ञासिते शक्तिः आनन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः सङ्गतिरित्यादि, प्रचुरप्रयोगस्य ज्ञानेच्छायामप्युपलम्भात् । एते । वाजिशब्दो व्याख्यातः ।

यत्वपरिमितं देयं इत्यत्र अपरिमितशब्दस्य बहुत्ववाचकत्वमुक्तम् । तदयुक्तम् । परिमित्यन्यरूपमुख्यार्थस्यालीकत्वात् प्रक्रान्तपरिमित्यभावस्य लक्षणैकगम्यत्वाच्च । विवरणमते ज्ञानसामान्येच्छाया असत्वकथनं तु ज्ञानं खल्विष्यमाणं विषयेण सहावगतमिष्यते । अनवगतिविषय इच्छाया अयोगात् । ततश्च प्रतिपन्ने वस्तुनि ज्ञानमिष्यमाणं संदिग्धे निश्चयफलं वा परोक्षे अपरोक्षफलं वेष्यते इति तत्रत्यविवरणग्रन्थेनैव आचार्यानभिप्रेततया व्याख्यातम् । घटेन जलमाहरेत्यादौ योग्यतया छिद्रेतरघटादेरिव निश्चयरूपस्यापरोक्षरूपस्य वा योग्यतया जिज्ञासापदाज्ज्ञानेऽपि न तत्र ताद्रूप्येण ज्ञाधातुबोध्यत्वमिति जिज्ञासाशब्दे न विचारसाध्यापरोक्षेच्छावाचकत्वम् ।

एवं विचारसाध्यज्ञानेच्छादिनापि न तद्बोध्यता । किंतु वस्तुतो यद्विचारसाध्यं ज्ञानं तद्विषयकेच्छाया ज्ञानेच्छात्वसामान्येनैवेति । जिज्ञासाशब्दे विचारसाध्यापरोक्षेच्छावाचकत्वमस्माकमनुमतमित्यपि युक्तम् ।

एवं च ज्ञानेच्छारूपवाच्यार्थसंबन्धिनि विचारे निरूढलक्षणेति मते न काचिदनुपपत्तिः । विधिस्थलेष्वपि लक्षणा न्यायानुगृहीता न दोष इति तु सर्वानुमतम् । **निबन्धे** तु—जिज्ञासा नाम न विचारः । इच्छायां सन्निधानात् । न च शास्त्रप्रवृत्त्यङ्गविषयप्रयोजनसूचनेन स्वार्थपरतोपपत्तौ विचारलक्षणा युक्ता । एवं च मुमुक्षानन्तरं ब्रह्मजिज्ञासा भवितुं युक्तेत्येव श्रुतोऽर्थः । विचारस्त्वा-

र्थिकः। ज्ञातुमिच्छा हि संदिग्धे विषये निर्णयाय भवति। निर्णयश्च विचारसापेक्ष इति इच्छानिमित्तेन विचाराक्षेपादार्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहार इत्युक्तम्।

यत्तु—श्रुतार्थे अनुवादत्वप्रसङ्ग इति। तदसत्। सफलानुवादत्वस्येष्टत्वात्। निबन्धमते—तद्विजिज्ञासस्व इत्यादेरपि अविरूपत्वाच्च न सूत्रस्य श्रुत्यननुसारिता। आर्थिके विचारे कर्तव्यत्वाभिधानं च सिद्धान्तकोटिनिगमनरूपतया न निष्फलम्, विचारसार्थक्य एव शास्त्रारम्भसिद्धेः विचारं विना इच्छाया अनुपपत्तिरित्यस्य तं विना इच्छाया विषयसिध्यनुपपत्तिरित्यर्थः। **एतेन** तद्विजिज्ञासस्वेति श्रुत्यनुसारिणा सूत्रेण इच्छाया अविधेयत्वे न लक्षणयापि विचारस्य विधेयत्वमावश्यकम्। किंचैवं सति जिज्ञासासंभवप्रदर्शनमात्रेण नैराकाङ्क्ष्यात् नार्थिकविचारकर्तव्यतांपरत्वं युक्तम् शास्त्रारम्भवत् तस्य फलत्वेनैव सिद्धेः। कथं च विचारं विनेच्छाया अनुपपत्तिः येन विचाराक्षेपकता। नहि कारणस्य कार्यं विनाऽनुपपत्तिः। न चेच्छा विचारसामग्री फलेच्छायां सत्यामपि साधनानुष्ठानादर्शनादिति **मन्दप्रलापो** निरस्तः।

**कौमुद्यां तु**—यस्मादधिकारिणां ब्रह्मज्ञानेच्छा संपन्ना तस्माद् ब्रह्मविचारः कर्तव्य इति अवान्तरवाक्ये श्रुत्या इच्छापरत्वेऽपि महावाक्ये लक्षणया विचारपर इति उभयपरो जिज्ञासाशब्द इत्युक्तम्। न चात्र युगपद्वृत्तिद्वयप्रसङ्गः। आवृत्तौ वृत्तिभेदस्य दोषस्यादोषत्वात्। अनावृत्तावपि गङ्गाया मत्स्यघोषौ स्त इत्यादौ वृत्तिद्वयाभ्युपगमाच्च विषयत्वेन फलत्वेन सूत्रस्थजिज्ञासापदेनैव संभवाच्च। सप्रयोजनानेकार्थत्वं हि सूत्राणां भूषणम्। प्रर्वतन्त्रेण अगतार्थताप्रसङ्गेन सविशेषनिरूपणसङ्गतिर्वक्ष्यते।

**तत्पुनः ब्रह्म प्रसिद्धमप्रसिद्धं** वेत्यादि**भाष्यम्**। अयमाशयः—वेदान्तमहावाक्यतात्पर्यनिर्णयेन तादृशवाक्यार्थप्रतिपत्तिप्रयोजनमिदं शास्त्रमिति न युक्तम्। तद्घटकपदार्थप्रसिद्ध्यभावेन तादृशवाक्यार्थस्य दुर्ज्ञेयत्वात्। यदि चाधीतसाङ्गस्वाध्यायस्य निगमनिरुक्तव्याकरणादिना ब्रह्मादिपदात् तत्प्रसिद्धिः। तर्हि तत एव पदार्थज्ञानवत् वाक्यार्थज्ञानमपि विनैव विचारं सिध्यतीति विचारवैयर्थ्यमेवेति। **उच्यते** इत्यादि सिद्धान्तभाष्ये "तत्रास्ति तावत् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावमि"त्यादि 'सर्वस्यात्मत्वाच्चे'त्यतः प्राक्तनं तत्पदार्थप्रसिद्धिप्रदर्शनपरम्। सर्वस्यात्मत्वाच्चे'त्यादि 'प्रतीयादि'त्यन्तं त्वंपदार्थप्रसिद्धपरम्। 'आत्मा च ब्रह्मे'ति भाष्यं उक्तपदार्थप्रसिद्धेर्वाक्यार्थप्रतिपत्त्युपयोगिताप्रदर्शनपरम्। यदि तर्हि इत्यादि पुनरापन्नमित्यन्तं तु पूर्वोक्ताशयस्फुटीकरणपरम्। **न तद्विशेषं प्रति विप्रतिपत्ते**रित्यादिभाष्यं च अप्रामाण्यज्ञानानास्कन्दितनिर्णयात्मनो मूलाविद्यानिवर्तकतावच्छेदकशक्तिमतो ज्ञानस्य प्रागसत्त्वप्रदर्शनेन विचारसाफल्योपपादकम्। तत्र तत्र विरुद्धन्यायानां बलाबलानिर्णयेन तत्प्रतिपक्षतया तत्त्वनिर्णयप्रतिरोधः तत्संशयो हि तन्निश्चये कथंचिज्जातेऽप्रामाण्यसंशयो वा दुर्वारः, दुर्लभश्च तादृशज्ञानविशेषोत्पत्तिप्रतिबन्धकयोः असंभावनाविपरीतभावनयोः प्रतिघात इत्यवश्यकर्तव्यो विचार इत्यभिप्रायकम्। तत्र कर्तृत्वाद्युपलक्षिते जगत्कारण-

त्वाद्युपलक्षितसच्चिदानन्दघनब्रह्मैकयरूपवाक्यार्थप्रतिपत्तौ विरोधिनीः विप्रपत्तीराह—**देहमात्र-मित्यादिना** । तत्र त्वंपदार्थधर्मिका विप्रतिपत्तयो लोकायतिकादिसांख्यान्तानां, ततःअस्ति तद्व्यतिरिक्त इति विप्रतिपत्तिः सेश्वरसांख्यकणभुगक्षपादपाशुपतादीनाम् । आत्मा स भोक्तुरिति तु सिद्धान्तकोटिप्रदर्शनम् । स सर्वज्ञत्वाद्युपलक्षितोऽनन्तसच्चिदानन्दघनः परमात्मा भोक्तुरौ-पाधिकभोगवतो जीवस्य आत्मा पारमार्थिकं रूपमिति तदर्थः । अत्र विशेषास्त्वाकरे अनुसंधेयाः ।

**एतेन** ब्रह्मणो जिज्ञास्यत्वार्थमेव प्रत्यगर्थेऽहमस्मीति प्रत्यक्त्वरूपेण समान्येन प्रति-पत्तिश्चार्वाकाणाम् । अहमर्थदेहेन्द्रियमनः शून्यत्वादिविप्रतिपत्तिश्चेत्युक्तम् इत्यस्मन्मतमनूद्य, न चैत-द्युक्तम्, व्यधिकरणत्वात् प्रत्यगर्थो ब्रह्मैवेति चेत्, अस्तु तावत् तथाहि न-तावद्बिम्बं ब्रह्म जिज्ञासा-धर्मि प्रतिबिम्बे तु सामान्यप्रतिपत्त्या तदिति युक्तम् प्रतिबिम्बमात्रे विप्रतिपत्या बिंबे जिज्ञासाया अदर्श-नेन ब्रह्म उद्दिश्य प्रत्यगभेदादिविधनाय ब्रह्मण्येव तयोर्वक्तव्यत्वात् । नापि देहत्वादिना विप्रति-पन्नः प्रतिबिम्बः प्रत्यगर्थ एव जिज्ञासाधर्मि प्रतीचो ब्रह्मत्वेन् जिज्ञासा च ब्रह्मजिज्ञासेति युक्तम् । लोकेऽनिश्चिते धर्मिणि निश्चितेन प्रकारेण विचारपदाप्रयोगेण सूत्रेऽश्रुतप्रत्यक्पदकल्पनापातात् । धर्मजिज्ञासेत्यादाविव श्रुतस्य ब्रह्मपदस्य कथं विचार इति प्रथमाकाङ्क्षितधर्मिपरत्वसंभवे तत्परित्या-गेन तद्विपरीतप्रकारपरत्वे श्रुतिहानापाताच्च । विरुद्धांशत्यागेन मुखमात्रस्येव चिन्मात्रस्यैवाभेदस्वी-कारेण विशिष्टयोर्बिंबप्रतिबिंबयोरभेदाभावेन ब्रह्माभेदविधानाय तस्योद्देश्यत्वासंभवाच्च। किं च धर्मि-ण्यतदारोपनिवृत्त्यर्थत्वात् लक्षणस्योत्तरसूत्रे प्रत्यगर्थ एव ब्रह्मत्वेन लक्षणीयः स्यात् । नहि वस्तुतः पुरुषे इदन्त्वादिना ज्ञायमाने स्थाणुत्वारोपः करचरणादिमान् पुरुष इति पुरुषलक्षणोक्त्या निवर्तते । किं तु अयमित्याद्युक्त्या । न वा जिज्ञासुना प्रतीचो ब्रह्मत्वं निश्चितम् । येन ब्रह्मणि लक्षिते प्रतीचि लक्षणविरोध्याकारो मिथ्येति ज्ञायेत । नापि लक्षणं प्रतीचोऽसाधारणधर्मतया तेन निश्चितम् । येन ब्रह्मणि तत्कथनमुखेन ब्रह्माभेदो ज्ञायेत । त्वत्पक्षेऽपि "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" "प्राणभृच्च" "अधिकं तु भेदनिर्देशात्" इत्यादौ जन्मादिसूत्रोक्तलक्षणस्य जीवे निषेधात् । **अत एवो**भयानुगतचिन्मात्रे त्वंपदलक्ष्ये विप्रतिपत्तिः जिज्ञासाधर्मि तु बिम्बब्रह्म चिन्मात्रमेवेति **प्रत्युक्तम्** । विशेष्यमात्रे विप्रतिपत्त्या विशिष्टधर्मिकविचारादर्शनात् विशिष्टस्य मुमुक्षुभिः अविचार्यत्वाच्च चिन्मात्रे अहंत्वादिविप्रतिपत्तेरभावाच्च सौत्रब्रह्मशब्दास्वारस्याच्च ।

**अथ** जिज्ञासाधर्मिणि ब्रह्मण्येव प्रतीचोऽन्यत्र वेति विप्रतिपत्तेर्न वैयधिकरण्यम् । **तर्हि** भवदीयभाष्ये इह सूत्रे प्रतीचि देहत्वादिविप्रतिपत्त्युक्तिः । उत्तरसूत्रे जीवाद्भेदकस्य लक्षणस्योक्ति-श्चायुक्ता । किं च ज्ञातं सामान्यतोऽज्ञातं विशेषेण विचार्यते । ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते । उक्तं चानुव्याख्याने इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनमिति कस्यचिदुक्तिः **परास्ता** ।

उक्तरीत्या निरङ्कुशबृहत्ववाचिना ब्रह्मशब्देनैव जिज्ञास्ये सर्वज्ञत्वाद्युपलक्षिते वस्तुनि जैवतात्त्विकस्वरूपाभेदस्यापि लब्धत्वेन सर्वज्ञत्वाद्युपलक्षितप्रत्यागभिन्नधर्मिजिज्ञासायाः कर्तव्यतालाभात्। तादृशधर्मिज्ञानस्य चाधीतैः साङ्गैः वेदान्तैरेव सिद्धतया तदर्थो विचारो न कर्तव्य इति शङ्कायां अध्ययनमात्रसिद्धा प्रतीतिर्नाज्ञाननिवर्तनक्षमा; तात्पर्यसंशयस्यानपोदिततया संशयरूपत्वादप्रामाण्यशङ्कास्कन्दितत्वात् असंभावनादिरूपाज्ञाननिवर्तकतावच्छेदकशक्तिविरोधिदोषसाचिव्याच्च। तात्पर्यसंशयश्च वादिविप्रतिपत्त्या। यदि जीवस्य तात्त्विकं रूपं देहेन्द्रियादि तदा तस्य बुद्धाभेदायोगः। यदि क्षणिकं विज्ञानं तदा नित्याभेदायोगः। यदि शून्यं तदा सदभेदायोगः। यदि च स्वाभाविकपरमार्थकर्तृत्वभोक्तृत्वादिमत् तदाऽतादृशसर्वज्ञत्वाद्युपलक्षितब्रह्माभेदयोगः। भोक्तैव केवलमिति सांख्यपक्षेपि जीवानां परस्परभेदोपगमात् निरङ्कुशपरिच्छेदशून्यवस्त्वभेदायोग इति जीवस्य यदनौपाधिकं त्वंपदलक्षणीयं रूपं तदेह एवेत्यादिविप्रतिपत्तयो भवन्ति। अनपोदितानिर्णीतबलाबलाश्च तात्पर्यसंशयद्वारा वाक्यार्थनिर्णये तन्निश्चयधर्मिकाप्रामाण्याग्रहेऽसंभावनाविपरीतभावनादिदृढीकरणे च हेतवः। एवं तत्पदार्थधर्मिकविप्रतिपत्ताचप्यूह्यमिति क्व वैयधिकरण्यशङ्कावकाशः। क्वा श्रुतहानमश्रुतकल्पनं वा। स्पष्टश्चायमर्थो निबन्धनकल्पतर्वादिषु। दर्शितश्च पञ्चपादिकायामपि।

ताश्च वस्तुतो ब्रह्मपदार्थविषया एव तदेकार्थत्वात् ब्रह्मशब्दस्येत्युक्तम्। तत्र तदेकार्थत्वादित्यस्य प्रत्यगभिन्नार्थकत्वादित्यर्थः। पूर्वोक्तरीत्या वस्तुपरिच्छेदराहित्यबोधनेन तल्लाभादिति भावः। एवं ब्रह्मणि विप्रतिपत्तिप्रदर्शनस्य प्रक्रान्तत्वात् अहंप्रत्ययविषयविप्रतिपत्त्यापि प्रणाड्या ब्रह्मविप्रतिपत्तिरेव निर्दिश्यते। यतो नाहंप्रत्ययविषयविप्रतिपत्तिप्रदर्शनेन किंचित्कृत्यमस्ति। तस्मात् साध्वेतत् "आत्मा स भोक्तुरित्यपर" इति। योऽयमहमित्युल्लिख्यमानश्चेतनो भोक्ता स ब्रह्मैवेति कैश्चित् प्रतिपन्नः तस्याहंप्रत्ययसिद्धो भोक्तृत्वावभासः स मिथ्यैवानाद्यनिर्वाच्याविद्याविलसितः। परमार्थतस्तु यः सर्वज्ञ ईश्वरोऽहंप्रत्ययेऽनन्तर्भूतः सोऽस्यात्मा स्वरूपभूतः। एवमसौ बृहत्यर्थान्वयात् ब्रह्मशब्दाभिधानीयत्वं लभते। इतरथा तद्रूपविकलस्य न निरङ्कुशं बृहत्वमिति न ब्रह्मशब्दाभिधेयत्वं स्यादित्यपि तस्यामेव प्रपञ्चितम्। प्रणाड्या परंपरया ब्रह्मविप्रतिपत्तिरेव प्रत्यगभिन्नत्रिविधपरिच्छेदशून्ये वस्तुनि विप्रतिपत्तिरेव। उक्तरीत्या प्रतीचो देहादिरूपत्वाभ्युपगमे च शुद्धबुद्धात्मके तदभेदायोगादिति भावः। अहंप्रत्ययेऽनन्तर्भूत इति अविद्योपाधिकस्यान्तःकरणाद्युपाधिकस्य मायाविद्याविषयत्वतदाश्रयत्वाद्युपाधिकात् जीवाद्व्यावहारिकभेदोपगमादिति भावः। तदुपदर्शनार्थमेव भोक्तृत्वादौ भेदकधर्मे अविद्याविलसितत्वाद्यभिधानम्। अखण्डार्थप्रतीतावुद्देश्यताविधेयतारूपविषयताद्वयानभ्युपगमाच्च विरुद्धांशेत्यादिकमक्षतिकरम्। एकस्या एव तादृशविषयताया ज्ञाताज्ञातोभयात्मकवस्तुवृत्तितया

उद्देश्यताविधेयतात्मना परं व्यवह्रियते । जन्मादिसूत्रोक्तं लक्षणमपि अविद्यान्तःकरणाद्युपाधिकात् । कल्पितभेदात् जीवरूपाद्वयावृत्तमेव । औपाधिकानिर्वाच्यभेदस्यापि तादृशविरुद्धधर्मासांकर्योपपादकतया व्यवस्थापितत्वात् । तादृशो भेदश्च न तात्विकाद्वैतविरोधी । ज्ञातं सामान्यत इति दूषणाभासश्च प्रागेव निरस्त इति सर्वमनवद्यम् ।

**सूत्राक्षरार्थस्तु**—निबन्धकारमते—अथ नित्यानित्यवस्तुविवेकानन्तरं अतः उक्तश्रुतीनां सत्त्वात् ब्रह्मजिज्ञासा ब्रह्मज्ञानेच्छा भवतीति । तथाच तस्यां तद्विषयसिद्धये वेदान्तानां ब्रह्मपरत्वनिर्णायकन्यायानुसंधानरूपो विचारः कर्तव्य इत्यर्थात् सिद्ध्यतीति । एतन्मते उक्तरीत्या सिद्धान्तसाधकन्यायोपोद्बलकतया कर्तृत्वाद्यध्यासोपवर्णनपरस्य भाष्यस्योपयोगः । कर्तृताप्रमुखबन्धस्य ज्ञानोच्छेद्यत्वमुपदर्शयता सूत्रेणैव तस्याज्ञानात्मकत्वमुपदर्शितमिति सिद्धान्तसाधकयुक्तेर्नोत्सूत्रता । अत एव चोक्तभाष्यं सूत्रसूचितार्थोपव्याख्यानरूपतया भाष्यलक्षणवत् । विवरणमते तु—अथातः शब्दौ पूर्वोक्तार्थकावेव । जिज्ञासाशब्दस्त्विष्यमाणज्ञानानुकूलविचारलक्षकः; कर्तव्यपदं चाध्याहार्यं इति विशेषः ॥

|| श्रीः ||

# || जन्माद्यस्य यतः ||

ब्रह्मणो जगत्कारणतामुपदर्शयति—**जन्माद्यस्य यत** इति। तथाच पुरोवादानुसारेणानुवादस्य नेयतया अत्रापि प्रत्यगभिन्नस्यैव ब्रह्मणो जगत्कारणता वाच्या। तथाच सद्विद्योपदर्शिताभिरेवोपपादकयुक्तिभिः ब्रह्मान्यनिखिलप्रपञ्चमिथ्यात्वावगमात्। आद्यसूत्रोक्तरीत्याशु क्तिरजतादिस्थलीयन्यायेन श्रुत्यन्तरैश्च ब्रह्मज्ञानस्य कर्तृत्वादिबन्धनिवर्तकता तन्मूलाज्ञाननिवर्तकतयैव वाच्येति कारणत्वाद्यनिर्वाच्यवस्तुविशिष्टज्ञानस्याविद्यानिवर्तकत्वासंभवेन तदुपलक्षितब्रह्मविचारकर्तव्यतापरत्वमेतद्वाक्यस्याप्रत्यूहमिति। यथाच वाक्यानां संसर्गागोचरप्रमाजनकत्वं तथोपपादितमधस्तादुक्तसिद्धान्तनिर्वाहकन्यायसूचकश्च जन्माद्यस्य यत इति यच्छब्दघटितसूत्रविन्यासः। दृश्यते च काश्यां मया दृष्टः स इदानीं पाटलीपुत्रे वर्तत इत्यादिवाक्येषु काशीस्थितत्वपाटलीपुत्रस्थितत्वविशिष्टयोरभेदासंभवरूपबाधकबलात्तदादिपदानां काशीस्थितत्वाद्युपलक्षितव्यक्तिपरत्वमिति। **निबन्धे** तु—"यतो वा" इत्यादिवाक्यं ब्रह्मलक्षणं प्रतिपादयति उत न; इति विरोधाविरोधाभ्यां प्रसिद्ध्यप्रसिद्धिभ्यां संशये विचार्यस्य ब्रह्मणो लक्षणमाक्षिप्यात्र समर्थ्यते। तत्र यद्यावदनुभूयते तत्सर्वं परिमितमशुद्धमबुद्धं विध्वंसि च। न च तेनोपलब्धेन तद्विरुद्धनित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः स्वरूपं शक्यं लक्षयितुम्। न हि जातुकश्चित् कृतकत्वेन नित्यं लक्षयति। न च ब्रह्मधर्मेण नित्यत्वादिना तल्लक्ष्यते तस्यानुपलब्धत्वात्। प्रसिद्धं हि लक्षणं भवति। नाप्रसिद्धम्। एवं च न शब्दोऽप्यत्र क्रमते अत्यन्ताप्रसिद्धतया पदार्थस्य ब्रह्मणो वाक्यार्थत्वायोगात्। तस्मात् लक्षणाभावात् ब्रह्म न जिज्ञास्यमिति प्राप्ते—

मा भूदनुभूयमानं जगत् तद्धर्मतया तदात्मतया वा ब्रह्मलक्षणं; तदुत्पत्त्यादि तु स्यात् देशान्तरप्राप्तिरिव सवितृव्रज्याया इति सिद्धान्तितम्। न चात्र पूर्वपक्षेऽनित्यस्य शब्दादेः नित्यगगनादेः लक्षणत्वदर्शनात् सिद्धान्तेऽप्यनात्मभूतस्य कारणत्वादेः तटस्थब्रह्मलक्षणत्वोपगमाच्च विरुद्धस्वभावयोः लक्षणभावानुपपत्तिशङ्का न संगतेति वाच्यम्। कारणत्वस्य शब्दादेः वा ब्रह्मगगनादिस्वरूपलक्षणत्वाभावेनोक्तासांगत्याभावात्। अत एव ब्रह्मणः स्वरूपं न लक्षयितुं शक्यमित्युक्तम्। अन्यथा ब्रह्म न लक्षयितुं शक्यमिति विन्यासोपेक्षा निर्बीजा स्यात्। न च जगतस्तटस्थलक्षणत्वाप्रतिक्षेपे न्यूनता स्यादिति तन्निरासाय विरुद्धस्वभावत्वमेव तत्रापि हेतू कर्तव्यं; हेत्वन्तरस्य युक्तत्वात् तथाचोक्तासंगतिः दुर्वारैवेति वाच्यम्। उपलब्धिमात्रस्य परिच्छिन्नवृत्तिताकीर्तनेन तद्धर्मतयोपलब्धस्य परिच्छिन्नवृत्तितासूचकादतिव्याप्तेः धर्मत्वेनानधि-

गतस्य लक्ष्यवृत्तित्वाभावेनासंभवस्य च स्फुटतया न्यूनतायाः शङ्कितुमशक्यत्वात्। अत एव धर्मलक्षणशङ्कायां नित्यत्वादिकमेवोपात्तम्। तस्य चाभावस्याधिकरणात्मतापक्षे स्वरूपलक्षणत्वस्यापि संभवेन तत्स्वरूपं लक्ष्यत इत्यनभिधाय तल्लक्ष्यत इत्येवोक्तम्। प्रकारान्तरेण तदुपपत्तिश्चाग्रे स्फुटीभविष्यति। न चैवमपि जिज्ञास्यस्येतरव्यावृत्त्यर्थलक्षणसूत्रे व्यावृत्तिशङ्कैवोचितेति वाच्यम्। तुल्यन्यायेनोक्तरीत्या लक्षणाप्रतिपत्तिशङ्काया अप्यवश्यनिरसीयत्वेन त्वदुक्तशङ्कामात्रस्यौचित्ये बीजाभावात्। न च सिद्धान्ते देशान्तरप्राप्तेः सवितृ व्रज्यायामवृत्तित्वेन तल्लक्षणत्वाभावात् दृष्टान्तासङ्गतिरिति वाच्यम्। तत्प्रतीतिजनकप्रतीतिविषयत्वरूपलक्षितमात्रेऽप्यस्य दृष्टान्तत्वात्। **वस्तुतस्तु** जगदुत्पत्त्यादेरपि न साक्षाद्ब्रह्मनिष्ठत्वमित्यसंभववारणाय तदुत्पत्तिकारणतापरत्वमवश्यं वाच्यम्। यत इति सौत्रपञ्चम्यनुरोधाच्च। तथाच तद्वदेव देशान्तरप्रक्षिपदस्यापि तज्जनकतालक्षकत्वात् नासङ्गतिः। देशान्तरप्राप्तेरित्यस्य च देशभेदावच्छिन्नो महादिक्सूर्यसंयोगो यथाश्रुतार्थः। जनकता चासमवायिकारणतारूपा ग्राह्या। तेन संयोगजनके द्रव्यादौ नातिप्रसङ्गः। संयोगावृत्तित्वेनापि जनकता विशेषणीया। तेन संयोगजसंयोगस्यासमवायकारणे संयोगादौ नातिप्रसङ्गः। सिद्धान्ते—समवायानभ्युपगमेऽपि तत्स्थाने तादात्म्यादिलक्षणसंबन्धस्योपगतत्वान्न समवायिकारणादिकं दुर्वचमिति।

**न्यायरक्षामणौ** तु यतो वा इत्यादिश्रुत्युक्तं जगत्कारणत्वं ब्रह्मलक्षणं युक्तमयुक्तं वेति संशये "स होवाच इहैवान्तः शरीरे स पुरुषः यस्मिन्नेताः षोडशकलाः प्रभवन्ति" "स ईक्षांचक्रे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम चे"ति जीवस्यैव प्राणादिनामान्तषोडशकलास्रष्टृत्वं श्रूयते। तद्यद्यप्यस्मदादेरनुपपन्नम्। तथापि प्रथमजन्यहिरण्यगर्भस्योपपद्यत एव॥ तस्यापि नोपपद्यते स्रष्टृत्वनिर्वाहकयोः चिकीर्षाकृत्योः देहेन्द्रियापेक्षत्वात् देहेन्द्रियाणां च भौतिकानां भूतसृष्ट्यनन्तरभावित्वादिति चेत् तर्हि ब्रह्मणोऽपि देहेन्द्रियान्तःकरणरहितस्य चिकीर्षाकृत्यसंभवात्। यदि च तस्य मायामात्रेण चिकीर्षाकृतिनिर्वाहः तदा हिरण्यगर्भस्य सूक्ष्मावस्थमन्तः करणमप्यस्तीति सुतरां तद्वत्वमुपपद्यते। अपि च बृहदारण्यके—"आत्मैवेदमग्र आसीत् पुरुषविध" इति हिरण्यगर्भं प्रकृत्य "ततो मनुष्या अजायन्ते"त्यादिना यदिदं किं च मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजते" त्यन्तेन तस्य मनुष्यस्रष्टृत्वमुक्त्वा तदनन्तरमग्न्यादिस्रष्टृत्वमुक्तम्। न चात्मैवेदमग्र आसीदिति परब्रह्मणः प्रस्ताव इति शक्यं "स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात्पुरुष" इत्यतः पाप्मसंसर्गप्रतीत्या "सोऽबिभेत्" सवै नैव रेमे" इति भयारतिश्रवणेन च तस्य संसारित्वावगमात्।

ननु तथापि बृहदारण्यके हिरण्यगर्भस्य वियदादिस्रष्टृत्वं न श्रुतमिति चेत्। सत्यम् देवमनुष्यादिसकलप्राणिजातस्रष्टृत्वं श्रुतमेव। तदेवात्र लक्षणम्। न च वियादिस्रष्टृत्वं लक्षणवाक्ये; भूतशब्दस्य येन जातानि जीवन्ति इति लिङ्गेन प्राणिपरत्वावगमात्। जीवनहेतुत्वं च भूतानामध्यात्मं प्राणाभिमानतयावतिष्ठमाने हिरण्यगर्भेऽप्यस्ति। भूतलयाधारत्वमपि

एकार्णवे च त्रैलोक्ये ब्रह्मा नारायणात्मकः।
भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः॥

जनस्थैर्योगिभिर्ध्येयः-इत्यादिपुराणेतिहासधर्मशास्त्रेषु तस्य प्रसिद्धम्। ननु—सकलभूतस्रष्टृत्वादिरूपं निमित्तत्वं हि न ब्रह्मलक्षणम्, किं तु तदुपादानत्वमिति चेत् उपादानत्वं हि तत्तजीवाभेदेनाध्यस्थान् देहेन्द्रियान्तः करणान् प्रत्युपादानत्वमेव वाच्यम्। नित्यानां जीवानां स्वतः कार्यत्वाभावात्; देहाद्युपादानत्वं तु तत्तजीवानामेव तेषां जीवतादात्म्यप्रतीत्या जीवानां तदधिष्ठानत्वात् सिद्धान्तेऽध्यस्ताधिष्ठानत्वातिरिक्तस्योपादानत्वस्याभावात्। अस्तु वा परब्रह्मभूतानां सृष्ट्युपादानत्वं तदापि मायाशबलं सविशेषमेव तथा वाच्यम्। निर्विशेषस्य कूटस्थस्य च मायाशाबल्यं विना सृष्टिक्रियाविशिष्टत्वस्य तत्तत्कार्यकारणे वर्तमानत्वस्य चासंभवात्। न च सविशेषं ब्रह्म लिलक्षयिषितम्। किं तु जिज्ञास्यत्वेन प्रतिज्ञातं शुद्धमेव। न च मायाशबलसगुणब्रह्मगतं कारणत्वं, तेन शुद्धस्योपलक्षणम्। शाखाग्रमिव चन्द्रस्य तस्य प्रकृष्टप्रकाशत्वमिवं सत्यज्ञानानन्दाद्यात्मकत्वं स्वरूपलक्षणम् आनन्दादयः प्रधानस्य इत्यधिकरणे शुद्धब्रह्मप्रतिपत्तिपरवाक्येषु सर्वेषूपसंहरणीयत्वेन वर्णयिष्यमाणस्य स्वरूपलक्षणत्वादिति वाच्यम्। तथासति स्वरूपलक्षणेनैव विशिष्यावगत्यर्थमवश्यापेक्षितेन सर्वतोव्यावृत्तस्य लक्ष्यस्यात्रगतिः संभवतीत्येतल्लक्षणवैयर्थ्यात्। चन्द्रस्य तुकेऽपि स्वरूपलक्षणे तद्दिदृक्षया चन्द्रबुभुत्सोर्गगने सर्वतश्चक्षुर्विक्षेपक्लेशः स्यात्। स माभूदिति देशविशेषे चक्षुर्नियमनार्थतया तटस्थलक्षणमुपयुज्यते। न चात्राप्यग्निसूर्येन्द्रादिमहिमप्रतिपादकेषु मन्त्रार्थवादेषु ब्रह्मबुभुत्सोः भ्रमणक्लेशः स्यात् स माभूदिति कारणवाक्यजाते दृष्टेः नियमनार्थतया तटस्थलक्षणमुपयुज्यत इति वक्तुं शक्यम्। कारणत्वातिरिक्तानामपि सर्वान्तरत्वादिद्वारा ब्रह्मप्रतिपत्तिपरवाक्यानां सत्त्वेन ब्रह्मप्रतिपित्सोः अद्वैतपरवाक्येषु सर्वेष्ववतरणाय तया कारणवाक्यमात्रे तद्दृष्टिनियमनायोगात् स्वरूपलक्षणान्तर्गतेनात्मशब्दोक्तेन पराग् रूपदेवतान्तरमहिमवर्णनपरमन्त्रार्थवादेभ्यो व्यावर्तनस्याद्वैतपरवाक्येष्ववतारणस्य चासिद्धेश्च। जगत्कारणत्वं सत्यं चेत् द्वित्वेनैकमिव न तेनाद्वितीयं ब्रह्म लक्षयितुं शक्यं मिथ्या चेदपि कृतकत्वेन नित्यमिव न तेन तल्लक्षयितुं शक्यम् विरोधादेव। तस्मादयुक्तमिदं लक्षणमिति प्राप्ते—सिद्धान्तः—भूतानि भौतिकं चाण्डं निर्माय तदनन्तरं। हिरण्यगर्भं तन्मध्ये निर्ममे परमेश्वरः॥ इत्यर्थे सकलश्रुत्याद्यैककण्ठ्यस्य दर्शनात्। यः षोडश कलास्रष्टा पुरुषः पर एव सः। प्राणोत्क्रान्तिप्रतिष्ठाभ्यां स्वस्य तद्वत्त्वमीक्षणम्। जीवस्य तद्वतस्ताभ्यां स्वात्मत्वेनावलोकनात्॥ तेजोऽबन्नप्रवेशो हि जीवकर्तृक एव सन्। जीवस्य स्वात्मतादृष्ट्या तेन स्वीयतयेक्षितः। परमेश्वरः प्रथमं

वियदादीनि भूतानि सृष्ट्वा तत्त्रिवृत्करणानन्तरं तैरण्डं निर्माय तन्मध्ये हिरण्यगर्भं निर्ममे इत्यस्मिन्नर्थे हिरण्यगर्भोत्पत्तिप्रतिपादकसकलश्रुतिस्मृतीतिहासपुराणानामैककण्ठयात् तदनुरोधेन प्रश्नोपनिषदुक्तषोडशकलास्रष्टा पुरुषः पर एव षोडशकलासु वियदादीनां अनुप्रवेशात् षोडशकला स्रष्टृपुरुषोपदेशानन्तरं तान् होवाचैतावदेवाहमेतत्परं ब्रह्मवेद नातः परमस्ति इति पिप्पलादवचनदर्शनाच्च। या तु प्राणोत्क्रान्तिप्रतिष्ठाभ्यां स्वोत्क्रान्तिप्रतिष्ठावत्वरूपं जीवलिङ्गं ताभ्यामुत्क्रान्तिप्रतिष्ठावतो जीवस्य स्वात्मत्वेनावलोकनात्। श्रूयते हि छान्दोग्ये तेजोऽबन्नानुप्रवेशो जीवकर्तृक एव सन् ईश्वरेण जीवस्य स्वात्मरूपतया दृष्टत्वात् स्वीयतया विवक्षित इति। तत्र हि—हन्ताहं इमातिस्रो देवता अनेन जीवनानुप्रविश्य नामरूपे व्याकरवाणीत्यत्र जीवकर्तृकोऽनुप्रवेशः स्वकर्तृकतया विवक्षित इति ह्याकरे समानकर्तृकत्ववाचिना क्त्वाप्रत्ययेन दर्शितम्। एवमिदमप्युपपद्यते।

यत्तु बृहदारण्यके—हिरण्यगर्भस्य देवमनुष्यादिभूतजातस्रष्टृत्वमुक्तम्। तत्तथैव न तावता सकलभूतस्रष्टृत्वं विवक्षितं सिद्ध्यति। स्वस्यातीतानागतकल्पसहस्रभवदेवमनुष्यादीनां चान्यसृष्टत्वात् परमेश्वरस्य तु सर्वकल्पानुयायिनो हिरण्यगर्भस्रष्टृत्वं तत्सृष्टसर्वभूतसृष्टत्वं चोपपद्यते। हिरण्यगर्भसृष्टमनुष्यादिषु कुलालसृष्टेषु घटेष्विव तस्यापि स्रष्टृत्वात् तदभावेऽपि हिरण्यगर्भसृष्टिद्वारा तस्य मूलकारणत्वानपायाच्च।

यत्तु—देहेन्द्रियादिषु तत्तज्जीवानामुपादानत्वात् ब्रह्मण उपादानत्वं न संभवतीति तन्न। शुक्त्यादितादात्म्येनाध्यस्यमानेषु रजतादिषु शुक्त्याद्यवच्छिन्नस्येव जीवतादात्म्येनाध्यस्यमानेषु देहादिषु जीवावच्छिन्नब्रह्मणोऽधिष्ठानतयोपादानत्वोपपत्तेः। सर्वतः प्रसृतस्य ब्रह्मचैतन्यस्य शुक्त्यादिभिरिव प्रतिबिम्बभूतैः जीवैरप्यवच्छेदानिवारणात्; य आत्मनीत्यादिश्रुतेश्च "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति" इति ब्रह्मणश्चेतनत्वेन सरूपान् जीवान् प्रकृत्योपादानत्वश्रुतेः तदुपाधिकदेहेन्द्रियान्तःकरणाद्युपादानत्वपरतया देहादीनां ब्रह्मोपादानत्वस्यावश्याङ्गीकर्तव्यत्वात्।

यच्च जगज्जन्मादिकारणत्वस्य तटस्थलक्षणत्वे तद्वैयर्थ्यमुक्तम्। तदपि न। यतोऽस्मिन् सूत्रे पूर्वसूत्राल्लक्षणसमर्पकं ब्रह्मपदमनुवर्तते। "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति श्रुत्या वस्तुपरिच्छेदपरिपन्थिनो लक्षणस्य दर्शितत्वाच्च। नहीदं लक्षणं ब्रह्मणः प्रत्यग्भिन्नत्वे प्रपञ्चस्य सत्यत्वे वा घटते। तथा सति तत्कारणत्वनियन्तृत्वाधारत्वादिधर्माणां सत्यत्वापत्त्या यत्र नान्यत्पश्यति इत्यादेरनुपपत्तेः। एवं च लक्ष्यपरब्रह्मशब्दार्थतया प्राप्तस्य निष्प्रपञ्चस्य यद्रजतमभूत् सा शुक्तिरितिवदध्यारोपन्यायेन सिद्ध्यर्थं तटस्थलक्षणं, स्वरूपविशेषप्रतिपत्त्यर्थं स्वरूपलक्षणमिति न कस्यापि वैयर्थ्यम्।

एतेन मिथ्याभूतेन सत्यं न लक्षयितुं शक्यमिति निरस्तम् । शुक्त्यादिषु स्वारोपितरजताद्युपलक्ष्यत्वदर्शनादित्युक्तम् । किं च जिज्ञासासूत्रे सविशेषस्य जिज्ञास्यत्वमुक्त्वा तस्यात्र लक्षणमुच्यते । उत निर्विशेषस्य । नाद्यः । शास्त्रस्य सविशेषपरत्वप्रसङ्गात् लक्षणासंभवपूर्वपक्षानुत्थानाच्च । न द्वितीयः । लक्षणस्यानाकाङ्क्षितत्वात् । कृत्स्नस्यापि मिथ्यात्वे व्यावर्त्यासिद्धेः । मिथ्यावस्तुनो व्यावर्त्यत्वे तत्प्रयोजिकाया अविद्यमानताया लक्षणेऽपि सत्त्वाल्लक्षणाक्षेपो न संगच्छते । किं च दृगतिरिक्तस्य मिथ्यात्वेन दृशः सत्यत्वेन च ज्ञानात् दृग्रूपस्वरूपलक्षणं सत्यत्वेन मिथ्याव्यावृत्तिश्च ज्ञाते एवेति कुतो लक्षणाकाङ्क्षा । विवरणमते प्रपञ्चमिथ्यात्वप्रतिपादकमेव प्रथमसूत्रम् । वाचस्पतिमते—साधनसंपत्तिदशायामेव मिथ्यात्वं निर्व्यूढमिति पूर्वपक्षस्यानुपपन्नत्वम् । मिथ्यावस्तुनो व्यावर्तकत्वाभावे सिद्धान्ते तटस्थत्वोक्त्या कथं परिहारः । एतेन लक्ष्यसमानसत्ताकस्यैव लक्षणत्वमित्यपि परास्तम् । तटस्थलक्षणस्याप्यभावप्रसङ्गात् ।

एवं शुक्तिरजतस्यापि तच्छुक्तिव्यावर्तकत्वमस्त्येवेति कथं मिथ्यावस्तुनो लक्षणत्वसंभवः । दृष्टान्तश्च विषमः कृतकत्वं हि नित्येनासंबन्धात् न तदन्यस्माद्व्यावर्तयति । कारणत्वं तु ब्रह्मगतं तत्कथमन्यस्मात् न व्यावर्तयेत् । एवं सिद्धान्तोऽप्यनुपपन्नः । न हि ताटस्थ्यं मिथ्यावस्तुनो लक्षणत्वोपपादकम् किं तु साक्षादसंबन्धिनः । मिथ्यात्वे हि साक्षात्संबन्धवत्परंपरासंबन्धोऽप्युपपन्न एव । दृष्टान्तश्च विषमः । रजतभानविषयत्वस्य सत्यस्यैव शुक्तिस्वरूपलक्षणत्वात् बाधानन्तरमपि शुक्तौ पूर्वं रजतस्य विद्यमानतामभ्युपगच्छतां जानतां भवतां मते रजतमपि शुक्तिस्वरूपलक्षणमेव शुक्तिस्वरूपसंबन्धादितरस्माद्व्यावृत्तिबुद्ध्युपयोगाच्च । तस्मात् ताटस्थ्योक्तिर्व्यर्था साक्षादसंबन्धात्पूर्वपक्षकरणे हि ताटस्थ्योक्तिः सफला स्यात् ॥

ननु—पूर्वपक्षे जगत्कारणत्वस्य ब्रह्मस्वरूपलक्षणत्वं न संभवति । तस्य मिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात् । सत्यत्वे तस्य प्रपञ्चनिरूप्यत्वेन निरूपकसत्यत्वमन्तरेण निरूप्यसत्यत्वासिद्ध्या प्रपञ्चस्यापि सत्यत्वप्रसङ्गेन निर्विशेषस्वरूपलक्षणत्वासंभवादिति विवक्षितम् । ततस्तटस्थलक्षणत्वेन परिहारः सिद्धान्ते युक्त इति चेन्न । साक्षात्संबन्धि स्वरूपलक्षणं, परंपरासंबन्धविशेषवत् तटस्थलक्षणमित्येव विभागात् । नहि स्वरूपमेव लक्षणं संभवति । लक्षणं हि नाम पूर्वं स्वरूपे ज्ञातेऽपि इतरव्यावृत्त्यवबोधाय जिज्ञासायोग्यं वस्तु । न च स्वरूपं तादृशं, स्वरूपज्ञानेनेतरव्यावृत्तिबुद्धौ लक्षणाकाङ्क्षाविरहात् । तज्ज्ञानेऽपि तदबुद्धौ न व्यावृत्तिबुद्धये स्वरूपजिज्ञासा स्यात् । किं तु धर्मजिज्ञासा । न च निरंशस्य ज्ञाताज्ञातस्वरूपद्वयं वक्तुं शक्यम् । किं चैवं पूर्वपक्षे सति निरूपके सत्यमिथ्यात्वे तटस्थलक्षण एव सूत्रे शब्दतः प्रतिपन्नेऽपि स्वरूपलक्षणपरत्वं किमर्थमिष्यते? यदि च **परिमलोक्त**रीत्या तटस्थेन शाखाग्रेण देशान्तरस्थवस्तुव्यावृत्तिसिद्धावपि तद्देशस्थनक्षत्रादिभ्यो व्यावृत्तिवदिहापि कारणत्वेन

शङ्काहेवस्त्वन्तरात् व्यावृत्तिर्न सिद्ध्यतीति तदर्थं स्वरूपलक्षणेऽपि तात्पर्यमित्युच्यते तदा तटस्थलक्षणं व्यर्थम् ।

ननु—आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इत्यानन्दस्यं जगत्कारणतयोपदिष्टत्वात् तादृशस्वरूपलक्षणप्रतिपत्त्यर्थमेव तटस्थलक्षणकीर्तनमिति चेन्न। तटस्थलक्षणप्रतिपन्नस्वरूपातिरिक्तस्वरूपस्य स्वरूपलक्षणेन प्रतिपत्तौ सद्वितीयत्वस्यावर्जनीयत्वात् । किं च कारणत्वस्यान्यत्र संभावनायामानन्दस्वरूपे कथं नान्यत्र संभावना । तेन विषमो दृष्टान्तः । प्रकृष्टप्रकाशवदन्यत्र संभावनाविरहासिद्धेः । किं च तटस्थलक्षणेन स्वरूपप्रतिपत्तिरस्ति न वा ? नान्त्यः । लक्षणत्वस्यैवाभावप्रसङ्गात् । आद्ये किमर्थं स्वरूपलक्षणम् इतरव्यावृत्तिबुद्धिजननार्थमिति चेत्तस्याः प्रतीतेः कुतः पूर्वप्रतीतिवैलक्षण्यम् ? पूर्वा प्रतीतिः न आनन्दगोचरेति चेत् हन्त दुस्त्यजं सद्वितीयत्वम्! पूर्वाप्रतीतानन्दस्वरूपगोचरतेत्युक्तावप्ययमेव दोषः । किं च सत्यं ज्ञानमित्येतदपि स्वरूपलक्षणमित्युच्यते तदप्यनुपपन्नम् । अनृतादिव्यावृत्तिबुद्धिहेतुतया हि तस्य लक्षणता वाच्या । स्वरूपमात्रस्य समानाधिकरणलक्षणवाक्येन लक्षणया प्रतीतौ कथं व्यावृत्तिसिद्धिः ? सत्यत्वादिविशिष्टैकदेशलक्षणात् व्यावृत्तिबुद्धौ विशेष्ये मानान्तरं वाच्यम् । तत्रापि लक्षणायामुक्त एव दोषः । तस्य मुख्यार्थत्वानङ्गीकारे चातत्त्वावेदकत्वप्रसङ्गः । इष्टापत्तावानन्दस्वरूपविशेषासिद्धिः । किं च सत्यं ब्रह्मेत्येतावतैव स्वरूपलक्षणसिद्धेः ज्ञानादिपदं किमर्थं ? ज्ञानादिस्वरूपलक्षणार्थमिति चेत् । किं तत्सत्यस्वरूपादन्यत् ? तथा सत्यद्वैतभङ्गः । सामानाधिकरण्यभङ्गश्च । अस्तु वाऽभेदे सत्येव स्वरूपभेदः । तथाप्यनेन पदेनास्य स्वरूपस्य लक्षणेत्ययं नियमः कुतः ? न हि गङ्गायाः तीरसंबन्धित्ववत् सत्यत्वस्य ज्ञानस्वरूपव्यावृत्तसत्यसंबन्धित्वं गृहीतमित्याह ।

तदसत् । प्रधानपरमाणुशून्यादेः व्यावर्त्यस्य सत्वेन तद्व्यावर्तकलक्षणाकाङ्क्षायाः स्थिरत्वात् । जगत्कारणतायाः मिथ्यात्वेन विभिन्नस्वभावरूपात् विरोधात् स्वरूपलक्षणत्वं प्रक्षिप्तम् । तटस्थलक्षणत्वमपि तज्ज्ञानबाध्यस्य तत्रारोपितस्यापि तद्धर्मिकेतरव्यावृत्त्यादिसिद्धिप्रयोजकत्वोपगमे बाष्पारोपितधूमादेरपि वह्न्यादिगमकत्वापत्यादिलक्षणातिप्रसङ्गविरोधात् । तत्परिहारश्च शङ्कानुवादपूर्वकं **विवरणे** दर्शितः । उपलक्षणत्वेपि नाद्वितीयस्वरूपलक्षणविरोधः । यद्रजतमित्यभात् सा शुक्तिरितिवन्मिथ्याभूतेनापि प्रपञ्चाकारणत्वेनोपलक्षणयोगात् असाधारणसंबन्धो हि लक्षणनिमित्तं न लक्षणसत्यत्वं काकादीनामसंबद्धानां गृहोपलक्षणत्वदर्शनादिति । अत्राप्येतेनेत्यादिना सैवाशङ्कानूद्यनिरस्ता । विवरणोक्तसमाधानस्योपक्रान्तत्वात् । तत्रोक्तमन्यदपि सुज्ञेयमिति परगमकतायां सत्यत्वस्याप्रयोजकत्वं नोक्तम् । न तूपलक्षणत्वोक्तिमात्रेणोक्तशङ्कानिरासो भवतीत्यभिप्रायेण वैयर्थ्याच्च । तस्य च तथा सति स्वरूपलक्षणतैवेत्यादिना निर्धारितत्वात् पुनरुक्तिः । स्वरूपलक्षणं च स्वरूपान्तर्गतम् । तत्स्वरूपाद्बहिर्भूतं च तटस्थ-

लक्षणमित्यभिमतं स्वरूपस्याविद्यकेन भेदेन धर्मधर्मिभावोपगमात् न लक्ष्यलक्षणभावानुपपत्तिः। जगत्कारणत्वं च स्वरूपलक्षणभूतानन्त्यप्रतिपत्त्युपयोगितया न व्यर्थम्। यथा च तस्य तदुपपादकत्वं तथाग्रे प्रपञ्चयिष्यते। न च तटस्थलक्षणेनापि चारितार्थ्यं, यतोऽनुमितिकरणत्वादिनानुमानादौ लक्षितेऽपि अनुमितिकरणत्वस्य लिङ्गतत्परामर्शादौ संभावितत्वेन लक्ष्यविशेषनिर्धारणाय 'तच्च लिङ्गपरामर्शः' इत्यादिना यथा तत्स्वरूपमुपदर्श्यते तथा जगत्कारणत्वादिना लक्षितेऽपि ब्रह्मशब्दार्थे तद्रूपेण संभाव्यमानप्रधानादिव्यावृत्तस्वरूपविशेषप्रतिपत्तये स्वरूपलक्षणाभिधानमप्यावश्यकम्। न च ब्रह्मशब्दोदितस्य निरङ्कुशबृहत्वस्य वस्त्वपरिच्छेदगर्भस्य प्रधानादिव्यावृत्तत्वात् स्वरूपविशेषनिर्धारणाय लक्षणान्तराभिधानमनावश्यकमिति वाच्यम्। जडस्यापि स्वभिन्नमिथ्यात्वसिद्धिमात्रेणापरिच्छेदसिद्ध्या जिज्ञास्यस्य जडव्यावृत्त्यसिद्धेः।

एवमानन्दाद्यनात्मकस्यापि ज्ञानस्यापरिच्छिन्नत्वसिद्धावपि न सिद्धान्त्यभिमतज्ञानानन्दात्मकलक्ष्यविशेषनिर्धारणं सिद्ध्यति। ततश्च मोक्षजनकज्ञानविषयीभूतवस्तुस्वभावनिर्धारणमनिष्पन्नमेव स्यात्। न चैकस्यापि ज्ञानत्वानन्दत्वादेः स्वरूपलक्षणस्यानतिप्रसक्ततयानेकलक्षणाभिधानं नार्थवदिति वाच्यम्। यादृशः स्वरूपलक्षणानां ज्ञेयब्रह्मपरवाक्येषु उपसंहारः आनन्दादयः प्रधानस्य इत्यत्रोपपाद्यते। तत्तद्धर्मोपलक्षितस्य वस्तुन एव मोक्षजनकज्ञानविषयतया लक्ष्यत्वेन प्रदर्शनीयत्वात्। यथा च ब्रह्मस्वरूपैक्येऽपि पदान्तरवैयर्थ्यस्य नावकाशः तथोपपादित**मखण्डार्थविचारे**। अत्रापि चाग्रे वक्ष्यते।

यत्तु—जगतो मिथ्यात्वान्यथानुपपत्त्यैव दृशः सत्यत्वं सिद्धमिति स्वरूपलक्षणस्यापि पूर्वसूत्रेण सिद्धतयात्र तदभिधानं व्यर्थमिति। तदप्येतेन प्रत्युक्तम्। ज्ञानोच्छेद्यत्वकथनेन बन्धस्याज्ञानात्मकत्वादनिर्वचनीयत्वादेः पूर्वसूत्रेण लाभेऽपि जिज्ञास्ये ब्रह्मणि ज्ञानत्वादेरलाभात्। न च बन्धनिवर्तकज्ञानविषयस्य पारमार्थिकत्वं विना बन्धस्य तज्ज्ञानोच्छेद्यत्वं न संभवतीति ज्ञेयस्य सत्यत्वात्मकस्वरूपलक्षणं प्रागेव सिद्धमिति वाच्यम्। सत्यत्वमात्रस्य सिद्धावपि ज्ञानत्वादेरसिद्धेः। न चैतावता सत्यत्वेन संभाव्यमानजडव्यावृत्तिसिद्धिः। ज्ञानानन्दादिस्वरूपलक्षणोक्तौ तु तथाभूते वस्तुनि जडदुःखाद्यात्मकत्वस्य व्याघातेन शङ्कितुमशक्यतया जडादिव्यावृत्तलक्ष्यस्वरूपसिद्धिरप्रत्यूहैव। विवरणादौ वक्ष्यमाणशास्त्रार्थस्य सिद्धवत्कारेण प्रसङ्गादाद्यसूत्र एव ब्रह्मणो दृग्रूपत्वादिकं व्यवहृतम्। न चैतावता तस्य तादृशसूत्रप्रमेयत्वं, येनात्र सूत्रे तदभिधानं पुनरुक्तं स्यात्। न च ज्ञेयस्य जडत्वे चेतनस्य जीवस्य तदभेदासंभवेन स्वरूपतोऽस्य मिथ्यात्वं विना ज्ञेयस्य निरङ्कुशापरिच्छिन्नत्वासिद्ध्या तत्सिद्ध्यनुरोधेन जीवस्यापि स्वरूपतो मिथ्यात्वोपगमे तस्य मोक्षान्वयित्वानुपपत्तेः जीवस्य मोक्षान्वयित्वसिद्धये ज्ञेयब्रह्माभेद अवश्याभ्युपेय इति जिज्ञास्यस्य जडव्यावृत्तिरपि पूर्वसूत्रेणैव सिद्धेति वाच्यम्। वैशेषिकोक्तरीत्या आगन्तुकचैतन्याश्रयत्वमात्रेण सिद्धान्त्यभिमतजाड्यव्यावृत्त्यसिद्धेः।

एवं सांख्योक्तरीत्या केवलज्ञानात्मकस्यापि जीवस्य नानन्दरूपत्वमिति न तदभेदमात्रेण ज्ञेयस्यानन्दत्वसिद्धिः। तस्माज्जडादिव्यावृत्तपरिच्छेदत्रयशून्यस्य प्रकाशानन्दघनपरमात्मरूपस्य ज्ञेयस्य वस्तुनः इतरव्यावृत्तस्य निर्धारणाय स्वरूपलक्षणाभिधानमावश्यकमिति न कस्यापि वैयर्थ्यम्। अत्र चोपलक्षणत्वेन जन्मादित्रयहेतुत्वमेवोच्यते। तच्च प्रत्येकं लक्षणं न समुदितम्, अव्यावर्तकत्वात्। न चैकस्यैवोपलक्षणत्वसंभवे उपलक्षणान्तराभिधानवैयर्थ्यम्। निरङ्कुशापरिच्छिन्नत्वोपादानत्वादिसिद्धिप्रयोजनकत्वेन त्रयाणामपि सप्रयोजनत्वात्। न च यतो-वेत्यादिवाक्ये अभिसंविशन्तीत्यनेन मुक्तिदत्वस्यापि लाभात् तृतीयमात्रग्रहणमयुक्तमिति वाच्यम्। मुक्तेरपि लयविशेषरूपतायास्त्वया मया च स्वीकृतत्वेन पृथक्तदुपादानायोगात् येयं प्रेते विचिकित्सा मनुष्ये इत्यादौ प्रेतपदस्य मुक्तपरतायास्त्वयोक्तत्वात्। आप्रायाणात्तत्रापि हि दृष्टमिति सूत्रे मुक्तौ प्रायणपदप्रयोगाच्च प्रपूर्वकस्यैतेर्मुक्तिपरतायामविवादात्। परमात्मन्यात्यन्तिकलयस्यैव मोक्षरूपतायाः तत्र तत्र पुराणेतिहासादावुक्तेश्च। न चैवमप्युत्पत्तिमदभावमात्रं प्रयन्तीत्यनेन विवक्षितं संविशन्तीत्यनेन च मोक्षो विवक्षित इति वाच्यम्; जन्मन इव लयस्याप्येकशब्देनैवोपादानसंभवे द्वैराश्येन तदाभिधानायोगात्। अन्यथोत्पत्तेरप्यभूत्वा भावित्वशरीरसंबन्धादिलक्षणायाः पृथगुपादानापत्तेः। अत एव च यत्पदं संविशन्तीत्यत्र पृथङ् न निर्दिष्टम्। कथं तर्हि प्रयात्यभिसंविशन्तिपदयोः सप्रयोजनत्वमिति चेत्। त्वयाप्येतत्परिशीलनीयमेव। गोबलीवर्दन्यायेन मया स्थितस्य गतिरुच्यते इति चेत्। बाढमुच्यताम्। लक्षणं तु पदद्वयलभ्यं लयकारणत्वमेकमेव सूत्रप्रतिपाद्यमिति को विरोधः।

मन्मते तु यत् यस्मात् प्रयन्तीत्येतावदुक्तौ दण्डाभिघातात् घटःप्रलीन इत्यादाविव परमात्मनः प्रलयहेतुतालाभेऽप्युपादानतानिर्वाहकस्य हेतुत्वस्यालाभात् अभिसंविशन्तीत्युक्तम्। तच्च तदात्मनावस्थानमिति नानुपपत्तिगन्धोऽपि। अत एव सुषुप्तौ ब्रह्मप्राप्तेरपि पृथङ्नाभिधानम्। सद्विलक्षणत्वेऽपि जगतो जन्मादिकमुपपद्यते। नच तथाभूते शशशृङ्गादौ जन्माद्यदर्शनात् जगतोऽपि न तद्युक्तमिति वाच्यम्। सतोऽप्यात्मनस्तददर्शनेन सत्त्वपक्षेऽप्युक्तदोषसाम्यादित्युक्तत्वात्। न चैवमपि य आत्मानमन्तरो यमयति इत्यादौ नियन्तृत्वस्यापि श्रवणात् यतोवेत्यादिवाक्यानुपात्तत्वापराधमात्रेण तत्त्यागो नोचित इति वाच्यम्। येन जातानि जीवन्ति इत्यत्रोक्तं प्राणधारणं जीवधातुमुख्यार्थमुपलक्षणीकृत्योत्पत्तिलयातिरिक्ततदीयव्यापारसामान्यार्थकस्थितिपदेन तादृशव्यापारसामान्यमनुगतीकृत्य तद्धेतुताया अभिधानेनैव नियन्तृताया अपि लब्धत्वात्।

यदि जीवन्तीत्यत्र जीवतिर्निरङ्कुशभूतपदोपात्तपदार्थमात्रान्वययोग्यस्य द्वितीयक्षणसंबन्धादेरेव बोधकः तदापि न क्षतिः। अस्येति संनिधापितस्य धर्मिणः इदमानिर्देशः षष्ठी-जन्मादिसंबन्धार्था यत इति कारणनिर्देशः अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृ-

संयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवतीति सूत्रं व्याचक्षाणेन भगवता भाष्यकारेणोक्तविशेषणविशिष्टस्यैव जगतः इदंशब्देन परमर्शनीयत्वसूचनात् तादृशविशेषणविशिष्टे जगति स्थित्यन्वयमभ्युपेत्य विशिष्टे तस्मिन् यत्प्रयोज्यत्वान्वयोपगमेन तादृशविशेषणस्थितिप्रयोजकत्वलाभात् तन्नियामकत्वेऽपि स्थितिहेतुत्वैव क्रोडीकृता। नहि तन्निष्ठक्रियाप्रयोजकशक्तिमत्वादन्यच्चेतनस्य तन्नियामकत्वम्। अथ द्वितीयत्वाद्यविशेषितकालसंबन्धमात्रं जीवधातुना विवक्षित्वा तादृशसंबन्धसामान्यप्रयोजकत्वकथनेनैवोत्पत्तेरपि ग्रहणसंभवात् कालसंबन्धद्वैराश्येनोत्पत्तिस्थितिहेतुत्वाभिधानमनर्थकमिति चेत् सत्यम्। कस्तवाप्यत्र प्रतीकारः? गोबलीवर्दन्यायेन समाधिश्च तुल्यः।

ननु—भाष्योक्तविशेषणानवच्छिन्नजगदुत्पत्त्यादिकारणत्वान्यसाधारणत्वे भवन्त्येव लक्षणानीति तादृशविशेषणोपादानं व्यर्थमिति चेत् सत्यम्। व्यावर्तकलक्षणे तादृशविशेषणोपादानं व्यर्थमेव। किंतु अस्तु ब्रह्मणो जगदुपादानत्वं तन्नियामकत्वं तु ततोऽन्यस्य स्यादिति शङ्काव्युदासाय हिरण्यगर्भादिजीवानामेव जगत्कारणत्वमिति पूर्वपक्षान्तरनिरासाय च श्रुतिसूत्रयोस्तद्विशेषणावच्छिन्नजगत्परामर्शकत्वमावश्यकम्। अन्यथा श्रुताविदंपदस्य वैयर्थ्यापत्तेः। संकोचकाभावे सर्वत्र प्रामाणिकनिखिलपरामर्शात् कार्यमात्रपरामर्शकतासिद्धये च भूतपदम् इत्यमेव च नियामकत्वलाभः **कल्पतर्वादौ** वर्णितः। भवतु ब्रह्मैव जगत उपादानम् अधिष्ठाता चोत्पत्तिस्थित्योरन्यः स्यात्। कुम्भकार इव कुम्भस्योत्पत्तौ राजेव राज्यस्थेम्नि इति माशङ्कीत्युत्पत्तिस्थितिग्रहणमिति। न च सर्वोत्पत्तिहेतुत्वकथनेनैव सर्वनियामकत्वमपि लभ्यत इति इदंपस्योक्तविशेषार्थपरत्वं नाश्रयणीयमिति वाच्यम्। तथा सति स्थित्यादिग्रहणस्यापि वैयर्थ्यापत्तेः। न च तदुत्पादकत्वे कथितेऽपि तन्नियामकत्वं न लभ्यत इति उत्पादकत्वनियामकत्वयोरेकवस्तुनिरूपितत्वेन लाभाय तदभिधानमावश्यकमिति वाच्यम्। यत्किंचित्कार्योत्पादकत्वे कथिते हि तन्नियामकत्वं न लब्धमिति युक्तं तस्यापि पृथक्कथनम्। अत्र त्वसंकुचितेन सर्वनाम्ना तत्कार्यतदीयनिखिलव्यापारतल्लयसाधारणेन रूपेण तत्प्रयोज्यत्वमुक्तमिति कथं नियामकत्वमलब्धं स्यात्।

अथ त्वयापि कथं स्थितिलयग्रहणसार्थक्यमुपपादनीयं उक्तरीत्या भवन्ति इति भूतानीति योगेन लभ्यस्य कार्यमात्रस्य संकोचकप्रमाणशून्याभ्यामिदंपदभूतपदाभ्यामुपात्तत्वादिति चेन्न। यतो वा इमानि भूतानि जायन्त इत्यत्र भूतपदेनाकाशादिभूतेषु प्राणिवर्गे च विरोधेन, भवन्तीति भूतानीति योगमात्रवृत्त्या आकाशादीनामेवोपस्थापनात् तदुत्पादकत्वमात्रं प्रत्याय्यते। येन जीवन्तीत्यनेन चोक्तरीत्या नियामकत्वं यत्प्रयन्त्यभिसंविशन्तीत्यनेन च लयकर्तृत्वमुपादानत्वं चेति कस्यापि वैयर्थ्यानवकाशात्। भवति हि यत इत्यत्र पञ्चम्याः निमित्तोपादानसाधारणहेतुतामात्रबोधकत्वम्। विभाषागुणेऽस्त्रियाम जनिकर्तुः प्रकृतिरित्यनुशासनाभ्यां उभयविधहेतुतावाचकत्वात्। एतेन "त्वं मुक्तिदो बन्धदोऽतोमतोनः त्वं ज्ञानदोऽज्ञानदश्चासि

विष्णो" इति श्रुत्या बन्धादिहेतुत्वस्याप्युक्तत्वेन तदसंग्रहो नोचित इति परास्तम् । उक्तस्य सर्वस्य नियमनहेतुत्वेनैव क्रोडीकृतत्वात् । अन्यथा चेतनस्थवैषयिकसुखदुःखादिहेतुत्वस्याचेतनगतपृथुत्वादिहेतुत्वस्याप्युपेक्षायाः निर्बीजतापत्तेः ।

यत्तु—सृष्ट्याद्यष्टककर्तृत्वमेव प्रकृते लक्षणतया वाच्यम् विचारविधायकनानावाक्यपर्यालोचनेन स्कान्दे सूत्रकृतैव कर्तृत्वाष्टकस्यैव लक्षणत्वेनोक्तत्वात् अत्रापि तस्यैव विवक्षणीयत्वात् । यद्वा सर्वैर्मुमुक्षुभिः विशिष्याष्टककर्तृत्वस्येवान्यकर्तृत्वस्य ज्ञेयत्वनियमाभावान्नान्यदिह्यादिशब्दार्थः । उक्तं च—

सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनात् ।
मोक्षं च विष्णुतश्चैव ज्ञात्वा मुक्तिर्नचान्यथा ॥

इति । अथवा विषयोपपादकगुणपूर्तिसिद्धये जीवाद्भेदके प्रसिद्धे जन्मादित्रितयहेतुत्वेऽभिहितेऽपि प्रयोजनसिद्धये मोक्षदत्वस्यापि वक्तव्यत्वात् तस्य बन्धकत्वं विनाऽयोगात् तयोश्च तद्धेतुज्ञानाज्ञानदत्वं विनानुपपत्तेः त्रितयहेतुत्वस्यापि वक्तव्यत्वात् दीपस्तम इव ज्ञानं बन्धाज्ञानं स्वभावादेव हन्ति किमीश्वरेणेति शङ्कायां दीपज्ञानस्वभावोऽपि भगवदायत्त इति वाच्यत्वादिति ।

तन्न युक्तम् । विचारविधायकवाक्यगतलक्षणानां संग्राह्यत्वे सत्यकामत्वसर्वान्तरत्वव्यापकत्वाद्युपेक्षायाः निर्बीजतापत्तेः । अथवेत्यादिकमपि न सङ्गतम् । जगज्जन्मकर्तृत्वेऽभिहिते तदन्तःपातिमोक्षदत्वस्यापि लब्धत्वेन पृथक्तदुक्तेरनपेक्षितत्वात् बन्धकत्वं विना मोचकत्वानुपपत्तिरित्युक्तिस्त्वयुक्ता । अन्येन बद्धस्याप्यन्येन मुक्तिदर्शनात् । एवं मोचकत्वेनैव ज्ञानदत्वसिद्धेः पृथग्ज्ञानदत्वमपि न वक्तव्यम् । अन्यथा विचाराधिकारप्रदत्वं विना ज्ञानदत्वस्याप्यसंभवात् विचाराधिकारहेतुभूतभक्त्यादिदत्वस्यापि पृथक् कथनापत्तेः ।

तत्र जन्मादिकारणत्वं तटस्थलक्षणम् । आनन्दादिकं स्वरूपलक्षणमिति सिद्धान्तः ।

ननु—किं तत्स्वरूपलक्षणं किं वा तटस्थलक्षणम् । न तावल्लक्ष्यगतमाद्यम् । द्वितीयं च लक्ष्यावृत्तीति युक्तम् । काकादेः गृहगतत्वस्य जगत्कारणत्वस्य ब्रह्मणि, अध्यास—तटस्थलक्षणस्य कारणत्रितयजन्यत्वस्याध्यासे सत्त्वेन स्वरूपलक्षणत्वापातात् आनन्दादेः स्वरूपलक्षणत्वाभावप्रसङ्गाच्च । **एतेन** सत्यासत्ये स्वरूपतटस्थलक्षणे इति निरस्तम् । काकादेरध्यासतटस्थलक्षणस्य च गृहादावकल्पितत्वात् । ननु कारणतापि विशिष्टे न तु शुद्धे इति चेन्न । शुद्धेऽसतोऽसंभवादिप्रसङ्गेन तल्लक्षणत्वायोगात् । न च लक्षणत्वस्यैवाभावे तद्विशेषतटस्थलक्षणत्वं युक्तम् । शाखाग्रस्थूलतारादिकं तु न चन्द्रारुन्धत्यादिलक्षणत्वेनोच्यते । किंतु चन्द्रादिव्यक्तिं प्रदर्श्य स चन्द्र इत्यादि वक्तुम । प्रकृते तु न तथा । शब्दैकगम्यशुद्धरूपस्य मानान्तरायोग्यत्वात् । न च यतो वेत्यादिवाक्यमेवाभिधया कारणत्वमुपस्थाप्य पुनस्तन्मुखेन

लक्षणया कारणत्वरहितमानन्दैकरसं शुद्धं बोधयतीति युक्तम्। सकृत्प्रयुक्ते वृत्तिद्वयायोगात् केवललक्षणयैव शुद्धबोधनसंभवेनाभिधया कारणत्वोपस्थानवैयर्थ्याच्च यत इत्यनेनैव पदेन शुद्धप्रतीतिरिति निरस्तम्। शुद्धरूपस्य तेनैव सिद्धत्वेनैव शेषवैयर्थ्यात्। सत्यज्ञानादिवाक्यान्तरेण शुद्धसिद्धौ कारणवाक्यवैयर्थ्यम्। नहि प्रकृष्टप्रकाशश्चन्द्र इत्युक्त्वा शाखाग्रमपि दर्शयति। न वा प्रकृष्टप्रकाशत्वादिज्ञानानुपायमन्यदेवोक्त्वा प्रकृष्टप्रकाशश्चन्द्रः इति वदन्ति। न च जगत्कारणं ब्रह्मेत्यनुक्त्वा आनन्दो ब्रह्मेति वक्तुमशक्यम्। नापि यावत्स्वप्रत्याय्यव्यावृत्तिभाव्य-भाविनी स्वरूपतटस्थलक्षणे; त्वन्मते यावद्व्यावृत्तिभाविव्यवर्तकान्तराभावेनास्यैव यावद्व्यावृत्ति-भावित्वासंभवात्। अध्यासतटस्थलक्षणेऽव्याप्तेश्च। अत एव न यावल्लक्ष्यभाव्यभाविनी स्वरूप-तटस्थ-लक्षणे; लक्ष्यव्यावर्तकस्याभावे लक्षणस्यानवस्थानाच्च। न ह्यक्षीराद्व्यावर्तकहीनं क्षीरं, न वा क्षीरतादशायामसन्माधुर्यविशेषो न क्षीरस्वरूपलक्षणम। "ईशानः प्रभुरव्ययः"। "अद्वैतः सर्वभावानाम् देवस्तुर्यो विभुः स्मृतः" "तुरीयं तत्सर्वदृक् सदे" त्यादिश्रुत्या कारणत्वादेरपि यावल्लक्ष्यभावित्वाच्च।

नापि लक्ष्यान्तर्गतानन्तर्गते स्वरूपतटस्थलक्षणे; अन्तर्गतपदेन लक्ष्यस्यैकदेशोक्तौ लक्ष्याखण्डत्वहानेः। अभेदोक्तौ तु प्रकृष्टप्रकाशत्वादेः चन्द्रस्वरूपलक्षणत्वेन स्वीकृतस्यापि तन्न स्यात् त्वया लक्षणवाक्यस्याखण्डार्थत्वाय प्रकृष्टत्वादेः चन्द्रप्रातिपदिकार्थाद्बहिर्भावस्योक्तत्वात्। प्रसिद्धस्यासाधारणधर्मस्य लक्षणत्वेनाप्रसिद्धस्य धर्मिणश्च लक्ष्यतया लक्षणस्य लक्ष्यमात्रत्वानुप-पत्तेश्च कारणत्वे लक्ष्यमात्रत्वलक्षणस्य ममाप्यनभिलषितत्वाच्च। आनन्दत्वादेरपि धर्मत्वे च आनन्दो लक्षणमिति चेत् तर्हि जगत्कारणं लक्षणमस्तु। कारणस्य सोपाधिकत्वेन निरुपाधिक-स्वरूपत्वाभावे आनन्दस्यापि तन्न स्यात्। त्वन्मते शुद्धे आनन्दत्वजातेरभावेनानुकूलवेदनरूपस्य वा परमप्रेमास्पदस्य वा दुःखविरोधोपलक्षितस्वरूपस्य वा सोपाधिकत्वात्। एवं ज्ञानमप्यर्थ-प्रकाशात्मकत्वेन सोपाधिकमेव भोजनस्य भोक्तृभोज्यसापेक्षत्वात् ज्ञानस्य ज्ञातृज्ञेयसापेक्षत्वात्।

**एतेन** यदुक्तं विवरणे विषयानवच्छिन्नमादित्यादिप्रकाशवदर्थप्रकाशनसमर्थं ज्ञानं स्वरूपलक्षणमिति **तन्निरस्तम्**। सामर्थ्यस्य शक्तिरूपत्वात् विषयनिरूपितत्वाच्च जगज्जननादि-सामर्थ्यस्यैव स्वरूपलक्षणोपपत्तेश्च। स्वरूपप्रकाशत्वं नान्योपाधिकमिति चेन्न। स्वरूपस्य स्वावेद्य-त्वात् व्यवहारयोग्यतायाश्च व्यवहारोपाधिकत्वात्। **एतेन**—निरुपाधिकसोपाधिके स्वरूपतटस्थे इति निरस्तम्। प्रकृष्टप्रकाशत्वादेः निकृष्टादिनिरूप्यतया मिथ्यार्थावभासकत्वस्यापि मिथ्यार्थनिरूप्य-तया तयोश्चन्द्राध्यासस्वरूपलक्षणत्वाभावापाताच्च। **एतेन**—स्वयं व्यावर्तकं स्वरूपलक्षणं व्यावर्तकोपस्थापकं तु तटस्थं काकादिर्हि व्यावर्तकं संस्थानाद्युपस्थापयतीति निरस्तम्। त्वन्मते कारणत्वेनोपस्थाप्यव्यावर्तकान्तराभावात् स्वरूपमात्रस्य च जिज्ञासाधर्मित्वेन प्रागेवोपस्थितेः। **एतेनैव** कार्यान्वयिरूपं विशेषणं स्वरूपलक्षणम्। तदनन्वयिरूपोपलक्षणं तटस्थम्। आनन्द त्वादिकं तद्विजिज्ञासस्वेति वाक्यविहितजिज्ञासारूपकार्यान्वितस्य मुमुक्षुज्ञेयत्वात्। न तु कारण-

तेति निरस्तम् । इतरव्यावृत्त्यर्थमानन्दत्वादेरिव कारणत्वस्यापि जिज्ञास्यत्वात् अन्यथा समन्वयाविरोधाध्याययोः तद्व्युत्पादनं न स्यात् । न च ब्रह्मण्यानन्दत्वादेः कारणत्वादेश्चारोपितत्वेऽविशिष्टे ऽपि दुःखव्यावृत्तिरेव ज्ञेया । न त्वकारणव्यावृत्तिरित्यत्र हेतुरस्ति । सुखस्वभावादसुखव्यावृत्तौ कारणस्वभावत्वादकारणव्यावृत्तिरस्तु । देवस्यैषस्वभावोऽयमिति श्रुतेः । किं च जन्महेतुत्वेनैवोपलक्षणेनोपलक्ष्यज्ञानसिद्धेः स्थितिहेतुत्वाद्युपलक्षणान्तरवैयर्थ्यम् । अस्मन्मते तु जन्महेतुत्ववत् स्थितिहेतुत्वमपि मुमुक्षुणा ज्ञेयम् । न त्वस्य ज्ञानोपलक्षणम् । तस्मात् बृहशब्दार्थगुणपूर्तिरूपलक्षणोपपादकम् ।

शक्तयः सर्वभावानामचिन्त्या ज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥

इत्यादिवचनसिद्धं यतो येनेत्यादिकारकशक्तिवाचिपञ्चम्याद्युक्तं तज्जन्मादिसामर्थ्यमपि परमानन्दादिवत् यावल्लक्ष्यभाविरूपस्वरूपलक्षणमेव वह्नेर्दाहकशक्तिवत् "एष नित्यो महिमा", "स्वाभाविकीज्ञानबलक्रिया" च इत्यादिश्रुतेः । किं च

असाधारणधर्मो हि लक्षणं परिकीर्त्यते ।
तच्च निर्धर्मकब्रह्मवादिनां युज्यते कथम् ॥ किं च—

स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम् ।
सजातीयाद्विजातीयात्तच्च न द्वेष्टि ते मते ।
कथं मिथ्याभेदसिद्ध्यै मिथ्यालक्षणकीर्तनम् ।
मुमुक्षुं तद्विजिज्ञासुं प्रति शास्त्रेषु शोभते ।

न च कारणत्वे श्रुतेरतात्पर्यान्नाप्रामाण्यं;

तात्पर्यनिर्णायकैः सूत्रैः प्रत्यधिकरणं सदेवेत्यादिवाक्यं न प्रधानादिकाराणत्वपरं किंतु ब्रह्मकारणत्वपरमित्युक्तेरिति चेत् ।

अत्रोच्यते—लक्ष्यान्तर्गतानन्तर्गते स्वरूपतटस्थलक्षणे । तत्र लक्ष्यान्तर्गतत्वं अभिन्नत्वम् । तच्चाभावस्याधिकारणात्मकत्वादन्तवत्वाभावरूपे आनन्त्येऽप्यस्ति । ज्ञानानन्दादौ च सुतराम् । यद्यप्यानन्दादीनां ब्रह्मस्वरूपत्वे ब्रह्मधर्मत्वं दुर्घटमिति प्रतिभाति । तथाप्यानन्दो विषयानुभवो नित्यत्वं नाम सन्ति धर्माः अपृथक्त्वेऽपि चैते पृथगिवावभासन्त इति **पञ्चपादिकोक्तेः** आविद्यकेन भेदेन तेषामप्यस्ति ब्रह्मधर्मत्वं नातो लक्षणत्वानुपपत्तिः । जगत्कारणत्वादिकं च शक्तिविशेषरूपत्वात् शक्तिशक्तिमतोस्तादात्म्यसत्त्वेऽपि स्वरूपैक्याभावात् तटस्थत्वम् । न चैतत्पक्षे प्रकृष्टप्रकाशत्वे चन्द्रस्वरूपलक्षणत्वानुपपत्तिरिति वाच्यम् । एतज्ज्योतिर्मण्डलान्तर्गततेजोऽवधिकापकर्षशून्यत्वरूपस्य प्रकर्षस्य प्रकाशत्वसमानाधिकरणस्य प्रकृष्टप्रकाशपदेनोक्तस्याभावाधिकरणयोरभेदमते चन्द्रस्वरूपलक्षणत्वानपायात् । आनन्दत्वजात्युपहितस्य केवलब्रह्मा-

भिन्नस्य प्रसिद्धस्यैव तादात्म्यविशेषेण ब्रह्मवृत्तेर्लक्ष्येण भिन्नाभिन्नस्य लक्षणत्वसंभवाच्च । उक्तरीत्या जगत्कारणस्य स्वरूपलक्षणता तु नानिष्टा । तथाप्यानन्दादेः स्वरूपलक्षणस्योक्तौ प्रयोजनं प्रागेवोक्तम् । न चैतत्पक्षे प्रकृष्टप्रकाशत्वादेः चन्द्रस्वरूपलक्षणत्वेन स्वीकृतस्यापि तन्न स्यादिति वाच्यम् । प्रकृष्टप्रकाशत्वपदेन तज्ज्योतिर्मण्डलान्तर्गततेजोऽवधिकापकर्षशून्यत्वस्य विवक्षिततया अभावस्याधिकरणात्मकत्वमते तस्य लक्ष्याभिन्नत्वेन उक्तस्वरूपलक्षणत्वानपायात् ।

एवं प्रसिद्धस्यैवानन्दत्वजात्युपहितस्य तादात्म्यविशेषेण ब्रह्ममात्रवृत्तेः ब्रह्मणा भिन्नाभिन्नस्योक्तरीत्या तत्स्वरूपलक्षणत्वमुपपन्नमेव । तर्हि जगत्कारणत्वोपहितस्यापि ब्रह्मलक्षणत्वमस्तीति तु नास्माकमनिष्टम् विशिष्टब्रह्मणः शुद्धब्रह्मशक्तिरूपतया वैष्णवादिषु पुराणेषु स्पष्टमुक्तत्वात् । दृश्यते हि वैष्णवे प्रथमांशे तृतीयाध्याये—

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणो ह्युपपद्यते ॥

इति मैत्रेयप्रश्ने—

शक्तयः सर्वभावनामचिन्त्या ज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥

इति संक्षेपेण स्वभावभूतसृष्ट्याद्यनुकूलशक्तिमत्त्वान्निर्गुणस्य जगत्स्रष्टृत्वमुपपाद्य "इत्युक्ताः कास्ताः शक्तयः" इत्याकाङ्क्षायां "ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः" इत्यादिना परापरशक्तिनां सपरसर्वशक्तीनां "ब्रह्मणस्तदनन्तर" इत्यनेन विष्ण्वात्मकपरशक्तिविशेषोपरक्तासु चिद्व्यक्तिषु शुद्धायां च तस्यामनुगतो बिम्बप्रतिबिम्बसाधारणसकलचन्द्रानुगतचन्द्रत्ववत् आनन्दत्वरूपो धर्मविशेषस्त्वस्माकमिष्ट एव । एवमर्थविषयकत्वोपहिता चित् ज्ञानं तन्निष्ठाखण्डधर्मविशेषस्तादृशचित्त्वं वा ज्ञानत्वं तादृशोक्तचितः ज्ञातृज्ञेयनिरूप्यत्वोपगमात् । तदीयशुद्धरूपस्य न तन्निरूप्यत्वं मानाभावात् क्रियान्तरीयकेवलरूपस्य तथात्वदर्शनमात्रेण ज्ञानस्यापि तथात्वापादने तद्वदुत्पत्तिरपि स्वरूपभूतज्ञानस्यापद्येत विषयानवच्छिन्नमित्यादिविवरणोक्तिश्च लक्ष्यस्वरूपाभिप्राया। तत्र चार्थप्रकाशनसामर्थ्यमुपलक्षणभूतमर्थविषयत्वमेव । तथाहि तत्र **विवरणम्**—लक्षणमनूद्य लक्ष्यस्वरूपं कथयितुमुत्तरभाष्यमित्याह—अस्य जगत इतीति ।

नन्वेवमपि **पञ्चपादिकायां** द्विविधं हि लक्षणम् उपलक्षणं विशेषणलक्षणं चेति विभागोऽनुपपन्नः । उपलक्षणस्य लक्षणत्वाभावेन लक्षणविभाजकेन वाक्येनाविभजनीयत्वात् इति चेन्न ; तत्रार्थविषयकत्वोपहितचिदात्मकस्वरूपलक्षणस्यैव विभजनात्। तत्रेदं लक्षणं प्रपञ्चधर्मत्वात् पृथग्भूतमेव कारणमुपलक्षयति । न विशेषणत्वेन । अतः पृथक्स्वलक्षणमुक्तमिति वाक्ये

पृथग्भूतमिति उक्तलक्ष्यतादात्म्यशून्यस्य, विशेषणमित्यनेन तादृशतादात्म्यवतश्चोक्ततयाऽस्म-दुक्तार्थानुकूल्यं स्फुटमेव ।

अथैवमपि तत्रत्यविवरणादिग्रन्थासङ्गतिर्दुर्वारैव । तथाहि तत्र **विवरणम्**—" ननु सोपाधिकधर्मत्वान्न स्वरूपलक्षणमित्युक्तम् । न, अनेन सर्वज्ञशब्देन सर्वावभासनक्षमं विज्ञप्ति-मात्रं आदित्यादिप्रकाशवदविषयोपाधिकं विज्ञानमेव ब्रह्मस्वरूपलक्षणं विवक्ष्यत इत्यविरोध " इति । सर्वज्ञत्वस्य सप्रतियोगिकत्वात् न स्वरूपत्वमित्यनुवदति—**ननु सोपाधिकेति** । सोपाधि-कत्वमसिद्धमित्याह—**नानेनेति** । अनेन सर्वज्ञशब्देन ज्ञप्तिमात्रं लक्ष्यत इत्यर्थः, इति तत्र **तत्त्वदीपनम्** । तथा च शुद्धचित एव तत्रोक्ततया तस्य च लक्षणत्वमयुक्तमिति लक्षणविभाजक-वाक्यविषयत्वं तस्यानुपपन्नम् । एवं प्राक् लक्ष्यप्रतिपत्तिपरमिदं भाष्यमिति स्वोक्तिविरोधश्चेति चेत् । **उच्यते** । न तावत्सर्वशक्तित्वं ब्रह्मासाधारणलक्षणं प्रधानादीनामप्यविशेषात् । सर्वज्ञत्वमिति चेन्न । तस्य सर्वोपाधिकत्वात निरुपाधिकब्रह्मस्वरूपत्वानुपपत्तिरिति विवरणे प्राक् शङ्कितम् । तत्रायमभिप्रायः—सर्वकारणत्वसमानयोगक्षेमस्य सर्वशक्तित्वस्योक्तावपि न प्रधा-नादिजडव्यावृत्तलक्ष्यस्वरूपावधारणम् । तथाच यदर्थं स्वरूपलक्षणानुसरणप्रयासः तदेवासिद्धमिति स्वरूपलक्षणाभिधानवैयर्थ्यम् । नापि सर्वविषयकं ज्ञानं स्वरूपलक्षणं, सोपाधिकत्वात् । कारणता न निरुपाधिकस्य ब्रह्मणः स्वरूपमिति प्रागुक्ततया तुल्यन्यायेनोक्तज्ञानस्यापि तथात्वा-संभवादिति । सेयं शङ्कात्र नन्वित्यादिनानूद्य विवरणे निराकृता ।

तत्राप्ययमभिप्रायः । यद्यपि सोपाधिकत्वमात्रमुभयत्रापि अविशिष्टं तथापि कारणता स्वभावत एव सोपाधिकी । उक्तविषयकत्वोपहिता चेत् नैवं तस्या मुक्तिदशायां विषयविषयि-त्वाद्युपाधिमन्तराप्यवस्थानात् कारणतायाश्च स्वकार्यनिरूप्यत्वाद्यपाधिविनिर्मोकेण नावस्थानम् । एवं च यद्युपहितचितो भेदमात्रं कल्पितमिति पक्षः तदा यथाश्रुतमेवेदं रमणीयम् ।

यदि च नानिर्वाच्येति तदापि न तस्याः स्वस्वरूपलक्षणत्वविरोधः । नहि स्वरूप-लक्षणत्वं कथंचिदपि लक्ष्यभेदशून्यलक्षणत्वम् । किंतूपहितकेवलात्मना यल्लक्ष्यतादात्म्यं तद्ल-क्षणत्वम् । न चैतावत्कारणत्वे संभवति तस्य शुद्धचैतन्योपहितरूपत्वाभावात् । सोपाधिक-त्वसापेक्षत्वादिशब्दैरपि निरुपधिकत्वतदीयोपहितरूपत्वान्यतराभावो विवक्षितः । एवं ब्रह्मस्वरूप-लक्षणमित्यस्य प्रधानादिभ्यो व्यावृत्तं ब्रह्मस्वरूपमित्यर्थः । लक्षणस्फोरणाय च सर्वावभाससमर्थ-मिति विशेषणम् । तेनापि सर्वव्यवहारप्रयोजकतावच्छेदकसर्वविषयकत्वादिरूपसामर्थ्योपाहिता-भिन्नत्वस्यैव विवक्षितत्वादिति न कोऽपि विरोधः । स्वरूपलक्षणोक्तप्रयोजस्फुटीकरणाय च लक्ष्य-स्वरूपस्याप्युक्तिरिति सर्वमनाकुलम् ।

एवं यावत्स्वप्रत्याय्यव्यावृत्तिभाव्यभाविनी स्वरूपतटस्थलक्षणे इत्यपि युक्तम् । कारणताया अविद्याद्यात्मकशक्तिविशेषरूपायाः तत्त्वज्ञानाव्यवहितोत्तरक्षणे अवर्तमानत्वेन तत्क्षणे वर्तमानदृश्यभेदादिकालव्यापकत्वायोगात् । एवं कर्तृत्वमपि मायात्मकशक्तिविशेषरूपायाः तत्त्वज्ञाननाश्यवृत्त्यादिरूपं जन्यमेवेश्वरगतमिति तस्यापि यावत् स्वप्रत्याप्यव्यावृत्तिभावित्वभावेन तटस्थत्वं स्फुटमेव । यद्यपि तत्तदर्थविषयकत्वोपहितचितः शुद्धचिदन्यत्वे जन्यत्वेन यावत्स्वप्रत्याय्यव्यावृत्तिभावित्वम् । तथापि जीवेशभेदाद्युपहितचितः तत्साक्षिरूपस्य यावत्स्वप्रत्याय्यव्यावृत्तिभाविन्याः स्वरूपलक्षणत्वमप्रत्यूहमेव ।

यदि च शुद्धोपहितयोः भेदमात्रं कल्पितमिति पक्षः तदा तु न काप्यनुपपत्तिः । एवं आनन्दस्यापि स्वरूपलक्षणत्वं बोध्यम् । एवं यावल्लक्ष्यभाव्यभाविनी स्वरूपतटस्थलक्षणे इत्यपि युक्तम् । शुद्धोपहितयोः भेदमात्रस्य कल्पितत्वपक्षे आनन्दस्य धर्मभूतस्य यावल्लक्ष्यभावित्वात् । पक्षान्तरे शुद्धोपहितचित्साधारण्याः ज्ञानत्वानन्दत्वादिजातेः स्वरूपलक्षणत्वसंभवाच्च । एवन्मते प्रकर्षविशिष्टचन्द्रत्वजातेरपि चन्द्रस्वरूपलक्षणत्वमप्रत्यूहम् ।

एवं सत्यानृते स्वरूपतटस्थलक्षणे इत्यपि युक्तम् । सत्यशब्दस्य लक्ष्यज्ञानाबाध्यार्थकत्वात् । असत्यशब्देन च लक्ष्यज्ञानबाध्यत्वस्य विवक्षितत्वात् । स्वयं व्यावर्तकं स्वरूपलक्षणं व्यावर्तकान्तरोपस्थापकं तु तटस्थमित्यपि साधु । कारणत्वस्य ज्ञेयब्रह्मगतानन्त्यरूपव्यावर्तकान्तरोपस्थापकत्वात् । अत एव कार्यान्वयिस्वरूपलक्षणं तदनन्वयि तटस्थमित्यपि रमणीयम् । आकाङ्क्षितबोधजनने यद्यद्धर्मप्रकारकस्य साक्षादेव द्वारता तत्त्वस्य कार्यान्वयित्वशब्देन विवक्षणात् सत्यज्ञानानन्दत्वादीनां ज्ञानस्य मोक्षजनकीभूतब्रह्मज्ञाने साक्षादेवोपायत्वात् । कारणत्वादेस्तु न तथा । तस्यानन्त्यरूपव्यवर्तकान्तरोपस्थापनद्वारैवोक्तप्रतिपत्तिहेतुत्वात् । एवं निरुपाधिकमोपाधिके स्वरूपतटस्थलक्षणे इत्यपि न प्रत्याख्येयम् । उक्तरीत्या निरुपाधिकपदस्य उपहितकेवलात्मना लक्ष्यभिन्नार्थकत्वात् ।

अथैवमपि नोक्तव्यवस्था रमणीया । तथाहि—तत्र तावत् आनन्दत्वादेः जातिरूपस्य स्वरूपलक्षणं लक्ष्यते । उक्तरीत्या तत्र लक्ष्यान्तर्गतत्वाभावेन प्रथमलक्षणस्याव्याप्तिप्रसङ्गात् । तस्यालक्ष्यत्वे च यावत् स्वप्रत्याय्यव्यावृत्तिलक्षणभावित्वादिलक्षणानामतिव्याप्तयापत्तेः । तथा काकादीनां गृहं प्रति तटस्थलक्षणत्वेन प्रसिद्धानां गृहज्ञानाबाध्यत्वेन सत्यत्वस्य स्वरूपलक्षणलक्षणाक्रान्तत्वात् तत्र तस्यातिव्याप्तिः । एवमुपहितचितां शुद्धान्यत्वाभ्युपगमपक्षे तस्य स्वरूपलक्षणलक्ष्यत्वाभ्युपगमे घटाद्युपहितचितां यावल्लक्ष्यादिभावित्वाभावेन द्वितीयादिलक्षणद्वयस्य तत्राव्याप्तिः । अलक्ष्यत्वपक्षे प्रथमादिलक्षणानां तत्राव्याप्तिः । एवमध्यासतटस्थलक्षणस्य कारणत्रितयजन्यत्वस्य लक्ष्यत्वे प्रथमलक्षस्याव्याप्तिः । अलक्ष्यत्वे यथासंभवं द्वितीयादीनामतिव्याप्तिरिति चेन्नैवम् ।

साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वं सव्यभिचारत्वमिति वदतां मते अलक्ष्यस्यापि विरुद्धस्यानुमितिविरोधिसंबन्धाव्यावृत्तिरनैकान्तिकत्वमिति लक्षणकर्तृमते लक्ष्यत्वेऽपि लक्ष्यालक्ष्यभावस्य मतभेदेन व्यवस्थितत्वात् न दोषः इति दीधितिकाराद्युक्तत्वेन प्रकृतेऽपि तद्रीत्या मतभेदेन लक्षणलक्षणभावव्यवस्थासंभवात् । यथा च नैकेनैवोपलक्षणेन स्वरूपलक्षणेन वा न विवक्षितार्थासिद्धिः तथोपपादितं प्राक् । शक्तयः सर्वभावानामिति स्मृतिस्त्वस्मदविरुद्धतया पूर्वमेव व्याख्याता । एष नित्यो महिमा ब्राह्मणस्येत्यत्र ब्राह्मणस्य ब्रह्मविदः एष पूर्वोक्तः नित्यो महिमा नित्यं महत्ववत्स्वरूपमित्यर्थः । स्वे महिम्नि प्रतिष्ठित इत्यादौ महिमशब्दस्य स्वरूपपरतादर्शनात् । स्वाभाविकी ज्ञानबलक्रिया चेत्यत्र च स्वस्य भावोऽसाधारणधर्मः अविद्याशक्त्याख्यः तदुपाधिकं ज्ञानं बलं क्रिया चेत्यर्थः । अतो न किंचिदस्मत्प्रतिकूलम् ।

यद्यपि जडव्यावृत्त्यादिकं ब्रह्मान्यत्वपक्षे मिथ्यैव तथापि तदुपलक्षितस्य रूपस्य तात्त्विकस्य बोधनाय मुमुक्षुं तत्त्वजिज्ञासुं प्रति व्यावर्तकस्य स्वरूपलक्षणादेरभिधानम् । लौकिकपरमार्थारुन्धत्यादिप्रतिपत्तये तन्निकटवर्तिन्यां स्थूलतारायामारोपितस्यारुन्धतीत्वादेरुपदेशवन्न विरुद्धम् । "ईशानः प्रभुरव्ययः" "देवस्तुर्यो विभुः स्मृतः" "तुर्यं तत् सर्वदृक् सदे" त्यादि च नास्मत्प्रतिकूलम् । ईशानत्वप्रभुत्वादीनामुपलक्षणत्वात् तुरीयस्य सर्वविषयोपलक्षितदृग्रूपत्वं सार्वकालिकमेवेत्यभ्युपगमाच्च ।

यत्तु "यत्तत्परं ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकल्मषम् । ब्रह्माख्यमन्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृतम्" इति स्मृतौ उत्पत्त्यादिकारणतानां स्वरूपलक्षणत्वमुक्तमिति । तच्चिन्त्यम् । स्वशब्दस्य स्वकीयेऽपि रूढत्वात् । अनन्यमद्वयमित्युपक्रमेण निर्भेदतया लक्ष्यप्रतिपादनाच्च । न च निर्भेदत्वेऽपि सविशेषत्वात् बहुत्वाद्युपपत्तिः । नेह नानेत्यादिश्रुत्या नानात्वमात्रस्यैव त्वद्रीत्या निषेधात् । नहि नानात्वं भेद एव न विशेष इत्यत्रास्ति नियामकम् । अधिकमग्रे वक्ष्यामः ।

किंचोद्भवनादिहेतुभिरित्यत्र न कारणतोच्यते हेतुशब्दस्य कारणताधर्मिवाचकत्वात् । किंतु कारणीभूताः सत्त्वरजस्तमोलक्षणाः शक्तयः । न च ता निर्गुणस्य स्वरूपेऽन्तर्भवन्ति । यदि च प्रागुक्तवैष्णववचनानुरोधात् ब्रह्मविष्णुशिवात्मकाः शक्तय एवात्र गृह्यन्ते तदा स्वरूपलक्षणत्वमपि विवक्षितं नास्मत्प्रतिकूलम् ।

केचित्तु—लक्ष्यगतागते स्वरूपतटस्थलक्षणे इत्यपि साधु । लक्ष्यते गम्यते अनेनेति व्युत्पत्त्या लक्षणपदस्येह तत्प्रतिपत्तिसाधनमात्रपरत्वात् । एवं च शुद्धब्रह्म न जगत्कारणमिति मते रूपान्तरोपहितस्य कारणत्वात् यच्छब्देन तं प्रक्रम्य तत्र जगत्कारणत्वमनूद्य तदुपलक्षितस्य

लक्षणया तच्छब्देन प्रतिपादनात् भवति कारणत्वमपि तु शुद्धब्रह्मप्रतिपत्तिसाधनमिति तत्र तल्लक्षणत्वव्यपदेशः। शाखायामिव चन्द्रलक्षणत्वस्य। अतो नासंभवादिः दूषणम्। सत्यतादि च प्राग्वल्लक्ष्यगतमसाधारणमेव लक्षणम्। न च तच्छक्यतावच्छेदकत्वेन बुद्धिविषयेयो धर्मः तद्विशिष्टवाचिना प्रकृतयच्छब्देनाबोधितस्य शुद्धस्य तच्छब्देन बोधनं दुर्घटम्। तथा तद्धर्म-शून्यस्य तद्धर्मोपलक्षितत्वमपीति वाच्यम्। धर्मः स्वोपहितेन तु शुद्ध इति पक्षे यः प्राक् श्याम आसीत्स इदानीं मया दृष्ट इत्यादौ प्रक्रान्तश्यामत्वोपहितनिरूपितकेवलरूपपरामर्शस्यापि तच्छब्देन दर्शनात्। न च श्यामत्वोपलक्षिते श्यामतायाः सत्त्वात् तस्य तदुपलक्षणत्वेऽपि प्रकृते न तथेति वाच्यम् उक्तमेतत् श्यमतादीनामपि तदीयकेवलरूपे साक्षात्संबन्धेन सत्त्वे मानाभावात् स्वाश्रयीयतादात्म्यविशेषवत्वस्यैवोपलक्ष्यतानियामकत्वेन तदवृत्तेः तदुपलक्षणत्वेऽप्यनतिप्रसङ्गात्। धेनुरिदानीं व्रजे अस्तीत्यादौ उपलक्षितबोधतात्पर्यके लक्षणया धेनुत्वोपलक्षितशुद्धगोव्यक्तिबोधवत् प्रकृतेऽपि शुद्धब्रह्मबोधोपपत्तिरूह्या।

एवं चैतन्मते काकस्य स्वोपहितीयकेवलरूपप्रत्यायकतायामेव तटस्थता। अन्यथा तु स्वरूपलक्षणत्वमेव। न चैवमुपहिततादाम्यज्ञानविषयत्वबाध्यत्वाभावादिधर्माणां शुद्धेऽवश्यमुपे-यतया निर्धर्मकत्वभङ्ग इति वाच्यम्। विषयत्वाधिकरणत्वानुयोगित्वतादात्म्यातिरिक्तभावधर्मा-नाश्रयत्वस्यैव निर्धर्मवत्वस्याभ्युपगमात्॥

## ॥ शास्त्रयोनित्वात् ॥

अत्र शास्त्रयोनित्वसमन्वयमुखेन सार्वज्ञ्यं दृढीकृत्य पूर्वोक्तजगज्जन्मादिकर्तृत्वरूप-लक्षणस्य ब्रह्मणि समन्वयाच्छास्त्राध्यायपादसङ्गतयः। अत्र च पूर्वोक्तं जगज्जन्मादिकारणत्वं ब्रह्मणो न संभवत्युत संभवतीति तदर्थं ब्रह्मणः सर्वज्ञत्वं संभवत्युत न संभवतीति तदर्थं वेदप्रणे-तृत्वमबुद्धिपूर्वकमुत बुबोधयिषापूर्वकमिति संशयः। किं तावत्प्राप्तम्। ब्रह्मणो जगज्जन्मादि-कर्तृत्वं न संभवतीति तदुपयोग्यतीतानागतवस्तुज्ञानस्य सृष्टेः प्राग्ब्रह्मण्यसंभवात्। तथाहि ब्रह्मणः स्वरूपज्ञानेनैव सर्वावभासकत्वमिति हि भवन्मतम्। यथोक्तं भाष्ये—"यस्य सर्वविषयावभा-सनक्षमं नित्यज्ञानमस्ति सोऽसर्वज्ञ इति प्रतिषिद्ध"मित्यादि। तथा च प्रकाशस्य स्वसंपद्धविद्य-मानार्थमात्रप्रकाशकत्वनियमादतीतानागतविषयकं ज्ञानमीश्वरस्य सृष्टेः प्रागसंभवि। न चानु-मित्यादीनामिवातीतादिविषयकत्वं स्वरूपभूतज्ञानेऽप्यास्तामिति वाच्यम्। अनुमित्यादेरन्तःकरण-परिणामस्य साकारतया तथात्वेऽपि निराकारस्य ब्रह्मणस्तदयोगात्। आध्यासिकतादात्म्येनैव विषयस्य विद्वास्यतेति भवद्भिरभ्युपगमाच्च। अत एव परेषामिवास्माकमपि स्वाभाविकोऽतिशय-विशेषो विषयितेति परास्तम्। निर्विशेषताविरोधाच्च।

यत्तूक्तरीत्या ब्रह्मणो विद्यमाननिखिलार्थप्रकाशसिद्धिः तज्जनितसंस्कारविशेषवत्तया स्मरणोपपत्तेरतीतादिसकलावभाससिद्धिः । न च सूक्ष्मावस्थारूपसंस्कारो नित्यचैतन्ये न संभवतीति वाच्यम् । तस्य स्वरूपेणाकार्यत्वेपि दृश्यावच्छेदेन कार्यत्वोपपत्तेः । सृष्टेः प्राङ् निखिलसृज्यमानप्राण्यदृष्टवशेन निखिलसृज्यमानपदार्थस्फुरणरूपेण मायायाः परिणममानत्वात् तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तत्साधकत्वमित्यनुगतवस्तुनि सिद्धिरिति । तन्न । उक्तमायापरिणामं प्रतीश्वरस्य कर्तृत्वाभावेन मायायाः स्वातन्त्र्यापत्तेः इष्टापत्तौ च स्वतन्त्रप्रधानवादनिषेधस्यासङ्गतेः नाममात्रे विवादपर्यवसानापत्तेः । संनिधानमात्रं च सर्वजीवसाधारणं सृष्टेः प्रागुक्तस्मृत्याद्युपगमे एकमेवाद्वितीयमित्याद्यवधारणविरोध इति कस्यचित्प्रलापस्तु न श्रद्धेयः । अविद्यातत्संबन्धकालकर्मादिवदुक्तवृत्तीनामपि तदविरुद्धत्वात् ।

**यदपि** स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्टसर्वावभासकत्वात् सर्वज्ञत्वं अतीतानागतयोरविद्याचित्रभित्तौ विमृष्टानुन्मीलितचित्रवत्संस्कारात्मना सत्त्वेन तत्संसर्गस्याप्युपपत्तेरिति **तदपि** न, सूक्ष्मरूपस्यातीतानागताभ्यां भिन्नत्वे तयोः ज्ञानासिद्धेः अभिन्नत्वे सृष्टिप्रलययोरुत्सादप्रसङ्गात् तस्मात् स्वतन्त्रप्रधानमेव जगत्कारणं तदैक्षत सोऽकामयत इत्यादिकेक्षापूर्विका सृष्टिर्महत्तत्त्वोपाधिकजीवविशिष्टस्यैवेति । तदुक्तं **साङ्ख्यप्रवचनभाष्यकृता**—प्रकृतिप्रवर्तकस्यैश्वर्यं न प्रकृतिपरीणामादिकं भवति इति । अन्योन्याश्रयादिच्छाद्यनन्तरं प्रकृतिप्रवर्तनं ततश्चेच्छदिरिति । या च तदैक्षत बहुस्यामित्यादिश्चेतनकारणता श्रुतिः सा सर्गादावुत्पन्नस्य महत्तत्त्वोपाधिकस्य पुरुषस्य जन्यज्ञानपरेति च ।

ननु सांख्येनापि वेदनित्यत्वं नाङ्गीक्रियते । बुबोधयिषापूर्वकं तदुच्चारणमपि तेनावश्यमुपेयम् । यो ब्रह्माणमित्यादिश्रुतिप्रामाण्यात् । तथाचातीतानागतार्थज्ञानासंभवे बुबोधयिषापूर्वकं सर्वज्ञानाकराणां सर्वज्ञगुणान्वितानां वेदानामुच्चारणमनुपपन्नमिति तेनापि कस्यचित्स्वरूपज्ञानेनैव सर्वज्ञता वाच्या । तथा च तुल्योऽनुयोग इति चेन्मैवम् । तन्मते योगर्धिसमासादितसार्वज्ञ्येनैव विष्ण्वादिना वेदोपदेशोपगमात् । न च योगर्धेर्वेदोदितधर्मानुष्ठानसाध्यत्वादन्योन्याश्रयादिशङ्का युक्ता । तस्यापि पूर्वपूर्वतनसिद्धादिगतवेदार्थत्वोपगमात् बीजाङ्कुरादीनामिव सिद्धानामप्यविश्रान्तप्रागवधिकधाटीस्वीकारात् । न चास्य महतो भूतस्येत्यादिश्रुतिरपि बुद्धिपूर्विकां वेदस्य तन्त्रकर्तृतामाह—निःश्वसितमित्युक्तिविरोधात् । यथा स्वापादिकाले निःश्वासप्रश्वासादिकं विनैव पुरुषबुद्धिं पुरुषात्प्रादुर्भवन्ति तथा वेदा अपि विनैव बुद्धिं स्वयंभुवः प्रादुर्भवन्तीति तयोक्त्या गम्यते । तदुक्तं—"यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेय"मिति । दृष्ट इवादृष्टेऽपि यस्मिन् कृतबुद्धिः बुद्धिपूर्वकत्वबुद्धिरुपजायते तत्पौरुषेयमिति व्यवह्रियत इत्यर्थः । एतदुक्तं भवति—न पुरुषोच्चरितत्वमात्रेण पौरुषेयत्वं वेदानां श्वासप्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयत्वाव्यवहारात् किं तु बुद्धिपूर्वकत्वेन । वेदास्तु निश्वासवदेवादृष्टवदबुद्धिपूर्वका एव

स्वयंभुवः सकाशादाविर्भवन्ति । अतो न पौरुषेयत्वम् । तथा च श्रुतिः—"अस्य महतोभूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद" इत्यादि च । तथा च प्रथमजात् स्वयंभुवःसकाशात् अबुद्धिपूर्वकमेव वेदाविर्भावः । आविर्भूतेभ्यो वेदेभ्यश्चोपचितपुण्यानां तेषामन्त.करणवृत्तिरूपमेव वेदार्थज्ञानं न स्वरूपभूतम् । तेन च तेषामीक्षापूर्विका तन्मात्रादिसृष्टिः । अत एव श्रुतिषु ईक्षापूर्विका सृष्टिस्तेज आदीनां भूतानामेवोक्ता न महत्तत्त्वाहङ्कारयोः । एवं च भवदभिमतब्रह्मणः सर्वज्ञत्वे प्रमाणाभावात् तत्र स्वरूपज्ञानमादाय सर्वज्ञत्वोपपादनायोगाच्च न निखिलजगत्कर्तृत्वमिति । एवं प्राप्ते उच्यते—**शास्त्रयोनित्वादिति ।**

आस्तां तावद्विप्रतिपन्नेन जगत्कर्तृत्वेन सार्वज्ञ्यसिद्धिः । परं तु त्वदभ्युपगतेन वेदकारणत्वेनैव तावत्तत्सिद्धयति । तथाहि—**यदुक्तं** "यो ब्रह्माण"मित्यादिश्रुतौ प्रतिपाद्यमानो वेदोपदेष्टा योगर्धिसिद्धसार्वज्ञ्यो विष्ण्वादिरिति । **तदयुक्तम् ।** महत्तत्त्वोपाधिकत्वेन त्वदभ्युपगतो यो ब्रह्मा हिरण्यगर्भः तत्स्रष्टृत्वेनाभिहितस्य वेदोपदेष्टुः महत्तत्त्वात्प्रागवस्थितस्य तत्सर्जनानुकूलज्ञानेच्छादिमत्त्वस्यावश्यकतया तदानीं बुद्धिवृत्त्याद्यसंभवेन स्वरूपभूतज्ञानमाश्रित्यैव तत्सर्जकत्वस्य वाच्यत्वात् । अत एव "तं ह देवमात्मबुद्धिप्रकाशमि"ति तत्रैव विशेषणं श्रुत्या दर्शितम् । आत्मभूता स्वरूपभूता या बुद्धिःज्ञानं सैव प्रकाशो विषयावभासो यस्य । यद्वा—आत्मस्वरूपमेव बुद्धेर्महत्तत्त्वस्य प्रकाशो यस्येति तदर्थः । एवं च शास्त्रयोनित्वान्यथानुपपत्त्या स्वरूपज्ञानेन सार्वज्ञ्यमवश्योपपाद्यम् । तथा च तुल्योऽनुयोगः । निःश्वसितश्रुतिश्च न बुद्धिपूर्वकत्वशून्यसर्जनाभिप्राया । किं त्वप्रयाससाध्यत्वाभिप्राया । स्वरूपभूतज्ञानस्यातीतादिविषयकत्वमपि नानुपपन्नम् । स्वस्ववर्तमानतादशायां विषयेष्वाध्यासिकचित्तादात्म्यसत्त्वात् सृष्टेः प्रागनागतादिविषयविषयितयोरभावेऽपि विषयताप्रतियोगित्वरूपा विषयिता स्वरूपज्ञाने निराबाधैव । तस्याः स्वाभाविकत्वाभावेऽपि औपाधिकत्वोपगमान्न दोषः । इत्थमेव च न्यायाद्यनुसारिभिः तान्त्रिकैश्चेशसर्वज्ञतोपपादनीया । अन्यथाऽतीतानागतादिविषये भागवतज्ञानस्य विषयातीततादिदशायां संबन्धान्तरस्यानभ्युपगमात् सृष्ट्यनुपपत्तेः । एवं यत्त्वित्याद्यनूदितरीत्यापि ब्रह्मणः सार्वज्ञ्यं सूपपादम् । न चोक्तदोषः । स्मरणस्य भगवदधीनसंसारोद्बोधाद्यधीनतया मायायां स्वातन्त्र्याप्राप्तेः । अनुमितावपि तदानींतनभाविकार्यविशेषजनकपुण्यपापादिरूपलिङ्गज्ञानस्य वर्तमानावभासकस्वरूपचैतन्यस्यैव कारणतासंभवेन नानुमितावपि मायायाः स्वातन्त्र्यम् । यदपीत्याद्युक्तरीतिरपि साध्वीयसी सत्कार्यवादिनं प्रति तन्नयानुसारेणैव सार्वज्ञ्योपपादनाय प्रवृत्तैराचार्यैस्तथाऽभिधानात् अभिव्यक्तितदभावाभ्यामेव सृष्टिप्रलयादिव्यवस्थोपपत्तेः सत्कार्यवादस्य सांख्यैः वेदान्तिभिश्चोपगमात् विचारासहत्वेऽपि पररीत्या परो बोधनीय इति न्यायेन तथोपपादनं न विरुद्धम् । इयांस्तु विशेषः—यत्प्रलये सदतीतमनागतं वा अस्मदादिभिः साक्षात्कर्तुमयोग्यम् । परमात्मना तु साक्षात्क्रियते । सिद्धान्तेऽनावृतचित्तादात्म्यस्यैव प्रत्यक्षरूपत्वात् परमात्मानं प्रति च तस्यावृतत्वाभावात् ।

नन्वभिव्यक्तिर्यदि प्रलये लीयते तदा प्रलयव्याघातः। यदि न तर्हि सर्वदा सर्ववस्तुसद्भावविरोध इति चेन्न। प्रलये कालिकसंबन्धेन तादृशाभिव्यक्तिसत्त्वेऽपि विषयनिष्ठतादृशाभिव्यक्तिकरणतायां प्रलयकालस्यानवच्छेदकतया घटादिः प्रलयेऽभिव्यक्त इति व्यवहाराद्ययोगात्। प्रकारान्तरेण सत्कार्यवादोपपत्तिश्च चन्द्रिकापरिमलादौ द्रष्टव्यः। यथा चायमर्थो भाष्यारूढस्तथानुपदमेव व्यक्तीभविष्यति।

नन्वेवमपि गाङ्गावालुकावायसदशनादिसंख्यासाधारणवस्तुमात्रज्ञत्वं शास्त्रयोनित्वेन कथं भवतः सेत्स्यति। बुबोधयिषापूर्वकवाक्यप्रयोगे कर्तव्ये वाक्यार्थज्ञानस्यावश्यकत्वे वाक्यार्थाप्रविष्टपदार्थाववोधनस्यानावश्यकत्वादिति चेन्न। अनेन हेतुना तदसिद्धावपि क्षत्यभावात् उक्तरीत्या स्वरूपज्ञानेन अतीतानागतविषयज्ञताप्रसाधनमात्रेणैव प्रकृतसिद्धेः। गाङ्गावालुकासंख्यादिकं चाध्यासिकसंबन्धेन सकलकार्योपादाने ब्रह्मणः स्वरूपज्ञाने सुसंबद्धम् तेन प्रकाश्यत इत्यत्र विवादाभावात्। प्रागुत्तरकालादौ तत्प्रकाशश्च अतीतानागतवेदार्थप्रकाशसमर्थ एवेत्यनुपपत्त्यभावात्। तत्सिद्धिप्रकारस्यापि भगवता भाष्यकारेण प्रदर्शितत्वाच्च।

तथाहि—यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात् संभवति यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धमिति सामान्यव्याप्त्युपदर्शकमुदाहरणम्। किमु वक्तव्यमित्यादिना श्रुतेरित्यन्तेनोपनयः। तस्येत्यादिना निगमनं च भाष्ये दर्शितम्। तत् कुतो हेतोः? सामान्यमुखव्याप्त्यधीनानुमानेन वेदार्थादतिरिक्तस्यापि वायसदशनसंख्यादेः ज्ञानसिद्धये, विनिगमकाभावात् बाधानवताराच्च। तादृशनिखिलवस्तुविषयकत्वमादाय साध्यं पर्यवस्यतीति सार्वज्ञ्यसिद्धिः। अयमेवार्थो निबन्धनविवरणयोः वेदः स्वविषयादधिकविषयकज्ञानवत्प्रणीतः वाक्यप्रमाणत्वात् पाणिन्यादिशास्त्रवदिति संगृहीतः। यद्यपि सूत्राक्षरानुगुण्याय ब्रह्म वेदविषयादधिकविषयकज्ञानवत् वेदप्रणेतृत्वादिति न्यायो वाच्यः तथापि फलतो विशेषाभावमनुसन्धाय तथोक्तम्।

यत्त्वत्र केन चित्प्रलपितम्—एकार्थज्ञमात्रप्रयुक्तस्यानेकार्थवाक्यस्याबाधितानेकार्थबोधकत्वदर्शनात् तत्र हेतुसाध्ययोः सामान्यव्याप्तिभङ्गः। नच स्वविषयेत्यनेन स्वतात्पर्यविषयस्य विवक्षितत्वाददोष इति वाच्यम्। तथासति प्राशस्त्यपरार्थवादबोध्यवायुक्षेपिष्ठत्वज्ञं ब्रह्म न स्यात्। पदार्थज्ञानं विना पदप्रयोगायोगेऽपि संसर्गज्ञानासिद्धेः। मानान्तरप्राप्ते संसर्गेऽवान्तरतात्पर्यस्याभावात्। किं च वेदस्यातत्त्वे तात्पर्ये प्रामाण्यायोगात्तत्त्वे चिन्मात्रे तात्पर्यं वाच्यम्। तथाच तन्मात्रज्ञं ब्रह्म न स्यात्। किं च प्रत्यक्षादिसिद्धस्य घटादेर्निष्प्रयोजनस्य गङ्गावालुकादेश्च शास्त्राविषयत्वात् तज्ज्ञं ब्रह्म न स्यात्। अपि च न तावदर्थमुपलभ्य रचयितृत्वं प्रणेतृत्वं पौरुषेयत्वापातात् नाप्यध्यापकवदुच्चारयितृत्वमात्रम्। तेन सार्वज्ञ्यासिद्धेः। किं च स्वव्यतिरिक्तोद्देश्यपुरुषगोचरस्य भ्रमस्य भ्रान्तिसिद्धशरीरादेश्चाभावे उच्चारणायोगेन तस्य चासार्वज्ञ्यंविनाऽसंभवात् शास्त्रयोनित्वं असार्वज्ञ्य एव हेतुरिति।

तदसत् । स्वविषयशब्देन [स्वप्रयोजकबुबोधयिषाविषयस्य] विवक्षितत्वात् । अर्थवादवाक्यप्रयोगे हि तद्वाक्यार्थज्ञानद्वारा प्राशस्त्यबोधो भवत्वितीच्छायाः प्रयोजकत्वात् तद्विषयतायाश्च वायुक्षेपिष्ठत्वादिसंसर्गसाधारणत्वात् । प्रमाणान्तरप्राप्तार्थबोधके हि वाक्ये तदर्थप्रमित्युद्देश्यकत्वरूपं तात्पर्यं नोपेयते । न तूक्तेच्छानिरूपितोक्तविषयत्वमपि । किं चेत्यादिकमपि असत् । तात्विकप्रामण्याभावस्य धर्माद्यंशे दृष्टत्वात् । व्यावहारिकस्य च तस्याविरुद्धत्वात् । किं च प्रत्यक्षेत्यादिव्या....र्थज्ञानमूलमिति स्पष्टमेव । अपि चेत्यादिकमपि न, निसर्गसिद्धाध्यापकवद्भगवतो बुबोधयिषापूर्वकवेदोच्चारणकर्तृत्वेऽपि स्वतन्त्रकर्तृत्वानभ्युपगमात् । अत एव **परे** वेदाः स्वतन्त्रपुरुषप्रणीता इत्यादिक्रमेण पौरुषेयत्वानुमाने साध्यं निर्दिशन्ति । चरमं किं चेत्याद्यपि न युक्तं; भ्रान्तिसिद्धं शरीरादिकं पारमार्थिकत्वेनानवगाहमानस्य भागवतज्ञानस्य भ्रमत्वायोगात् । बाध्यविषयकत्वमात्रस्य भ्रमत्वे त्वस्मिन्मतेऽपि अत्यन्तासज्ज्ञप्तेः भागवत्यास्तथात्वापातात् । अधिकमन्यत्र प्रपञ्चितम् । हेतावपि बुबोधयिषापूर्वकत्वं वाक्ये विवक्षणीयम् । तेन शुकाद्युच्चरितप्रमाणवाक्ये न व्यभिचारः ।

**यद्यपि** लक्षणानन्तरमवश्यापेक्षितप्रमाणपरत्वसंभवे अन्यपरत्वं न युक्तम् । त्वदभिमतभ्रमाधिष्ठानत्वरूपकारणत्वेन सार्वज्ञ्यालाभश्च । पूर्वसूत्रे अर्थलब्धसर्वशक्तित्वादित्यागेन सार्वज्ञस्यैव समर्थने निमित्ताभावाच्च । सांख्याभिमताचेतनकारणतायाश्च चेतनत्वमात्रेण निषेधसंभवात् सांख्यानभिमतेन शास्त्रयोनित्वेन सार्वज्ञसाधनायोगाच्च । श्रुत्या शास्त्रयोनित्वमुक्त्वा तेन सार्वज्ञं प्रसाध्य तेन प्रधानकारणतानिषेधाद्वरं श्रुत्यैव तन्निषेधः । जगन्निर्माणेनास्फुटीकृतस्य सार्वज्ञ्यस्य तदेकदेशशास्त्रनिर्माणेन स्फुटीकरणायोगश्चेति ।

**तदप्यसत्** । असंभवदुस्थे लक्षणे प्रमाणाभिधानस्यावसराभावात् । जन्मादिसूत्रोदाहृतश्रुतिरूपप्रमाणस्यावगतत्वेन प्रमाणाकाङ्क्षाया अनुदयाच्च । त्वयापि हि न प्रमाणजिज्ञासया सूत्रमवतारितम्, किंतु शिवादावतिव्याप्तिशङ्कानिरासकतयैव । भ्रमाधिष्ठानत्वमात्रं न जन्मादिसूत्रे विवक्षितम् । किंतु जगत्कर्तृत्वादिकमपि । यदाह तत्र भवान् भाष्यकारः—न यथोक्तविशेषणस्य जगत इत्यादि । पूर्वसूत्र इत्याद्यपि न युक्तम् । सार्वज्ञव्यवस्थापनद्वारा सर्वकर्तृतारूपतच्छक्तेरपि समर्थ्यमानत्वात् । सांख्याभिमतेत्यादिकं तु अव्युत्पन्नवचनम् । शास्त्रयोनित्वेत्यादिकमपि न सत् वेदानित्यत्ववादिना सांख्येन पुरुषविशेषे शास्त्रयोनित्वोपगमात् । श्रुतिप्रामाण्यवादिना तेन यो ब्रह्माणमिति श्रुतिसिद्धबुबोधयिषापूर्वकवेदोच्चारयितृत्वस्याप्यङ्गीकाराच्च । परं वेदोपदेष्टापि न जगत्कर्तेत्येव तदभिप्रायः । श्रुत्येत्यादिकमपि एतदधिकरणीयपूर्वपक्षसिद्धान्ताद्यनभिज्ञताहेतुकम् । एवं जगन्निर्माणेत्याद्यपि ।

ननु शास्त्रयोनित्वसूत्रे त्वदुक्तसर्वज्ञताबाधकहेतुनिरासकयुक्तेरसूत्रणात् उत्सूत्रता स्यादिति चेन्न । त्वन्मतेऽपि द्युभ्वाद्यायतनं स्वशब्दात् इत्यत्र पूर्वपक्षे निरवकाशतया शङ्कितस्य जायमानत्वलिङ्गस्य ब्रह्मण्युपपादकहेतोराद्यसूत्रे मुक्तोपसृप्यव्यपदेशात् इत्यादिगुणसूत्रेषु च काण्ठ्यनुक्ततया सिद्धान्तयुक्तेरुत्सूत्रताया दुर्वारत्वात् । एवमन्यानि स्थलान्यप्युदाहर्तव्यानि ।

**न्यायरक्षामणौ तु**—पूर्वसूत्रोक्तं जगत्कारणत्वं दृढीकुर्वता भगवता सूत्रकारेण वेदस्य नित्यत्वात् न ब्रह्मणोऽनादिषट्केतरनिखिलजगत्कर्तृता संभवतीति शङ्कापि निराक्रियते। एतस्य चानुषङ्गिकत्वात् न पृथक् संगत्यपेक्षा। अत एव वेदानित्यत्वव्यवस्थापनं वियत्पाद एव संगतं नात्रेति कुचोद्यमपि निरालम्बनम्। तथाच अस्य महतोभूतस्येत्यादिवाक्यं ब्रह्मणो वेदकारणत्वेन सर्वज्ञत्वं प्रतिपादयति नवा इति संशये न प्रतिपादयति पौरुषेयत्वापातात्। नाप्युपादानत्वेन, कार्योपादानयोरेकशक्तिमत्ताया अपि शतशो व्यभिचारात्। वेदस्येव ब्रह्मणोऽपि स्वयमज्ञस्यैव सर्वार्थप्रकाशकत्वस्यैव सिद्ध्यापत्तेश्चेति पूर्वः पक्षः।

**सिद्धान्तस्तु**—इदं वाक्यं ब्रह्मणो वेदकर्तृत्वेन तत्साधयत्येव। वक्तृत्वं च बुबोधयिषापूर्वकवाक्योच्चारयितृत्वम्। अधिकं नु प्रागुपदर्शितसरण्याऽवसेयम्। वेदोपादानत्वेन वा तस्य तत्साधयति दीपगतायाः प्रकाशशक्तेः तदुपादाने वन्ह्यादावपि दृश्यमानतया कार्यकारणयोरेकशक्तिमत्वस्यौत्सर्गिकतया वेदगतायाः प्रकाशनशक्तेः बाधकाभावेन तदुपादाने ब्रह्मण्यपि प्राप्तेः। न हि घटगतोदकाहरणशक्तेः मृत्पण्ड इव अन्धकारगतावरणशक्तेः प्रकाशरूपत्वेन श्रुतिसिद्धे ब्रह्मण्यापादनं संभवति। दृष्टान्ते प्रत्यक्षविरोधस्येव अत्रापि श्रुतिविरोधस्य जागरूकत्वात्। न चाज्ञानस्यापि त्वन्मते कार्यसामान्यं प्रत्युपादानतया वेदगतार्थप्रकाशनशक्तेरविद्यायामपि आपत्तिरिति वाच्यम्। नीहरेण प्रावृता इत्यादिश्रुतिभिः आवरणरूपतासाधनविरोधात् औत्सर्गिकनियमस्य त्यागोपपत्तेः। यद्वा—वेदगता सर्वार्थप्रकाशनशक्तिः तदुपादानगता कार्यगतप्रकाशशक्तित्वादिति रीत्याऽवसेयम्।

**विवरणे** तु यथा दीपगता प्रकाशनशक्तिः तदुपादाने वह्नौ तथा वेदगता सर्वार्थप्रकाशनशक्तिः तदुपादाने ब्रह्मणि, कार्योपादानयोरेकशक्तिमत्वादित्युक्तम्। क्वचित्कारणे दृष्टस्यापि शक्तिविशेषस्य कार्यदर्शनात्।

**यत्तु** त्वन्मते अन्धकारदहनादेरपि ब्रह्मोपादानकत्वात् तद्गतावरणदाहादिशक्तिमद्ब्रह्म स्यात्। अविद्यापि शास्त्रोपादानमिति सापि सर्वज्ञा स्यात्। अस्तु वा परिणामिपरिणामयो रेकशक्तिमत्त्वम्। अधिष्ठानाध्यस्तयोस्तु तत्कथम्?। एतेनाधिष्ठानब्रह्मणो विज्ञानशक्तिविवर्त एव शास्त्रमिति निरस्तम्। अविद्याकाशादेरपि तद्विवर्तत्वेन शास्त्रवत्सर्वप्रकाशकत्वापातात्। रज्ज्वामपि भयकम्पादिशक्तेः ब्रह्मण्यावरणविक्षेपादिशक्तेः प्रसङ्गात्। बाह्यागमानामपि ब्रह्मविवर्ततया तदर्थज्ञत्वे ब्रह्मणो भ्रान्तत्वप्रसङ्गात्। अपि च त्वया कार्योपादानयोः एकशक्तित्वोपगमात् वेदः स्वयमज्ञ एव जीवान् प्रति प्रकाशक इति ब्रह्मापि तथा स्यात्। तथा च सार्वज्ञ्यार्थं यत्ने अत्यन्तासार्वज्ञ्यमेवापन्नम्। किं च जन्मादिकारणत्वेनैवोपलक्ष्यस्वरूपसिद्धेः किं निर्विशेषत्वप्रतिकूलसार्वज्ञ्यविस्फोरणादिना।

**तदयुक्तम्**—कार्योपादानयोः एकशक्तिमत्त्वमित्युत्सर्गः। स च सति बाधकप्रमाणे न प्रवर्तते। तदनवतारे च तत्प्रवृत्तिर्निराबाधैव। एवं च स्वप्रकाशज्ञप्तिरूपे ब्रह्मणि वेदगतप्रकाशन-

शक्तिबाधकाभावात् औत्सर्गिकनियमेन सिद्ध्यन्ती नापह्नोतुमुचिता। पूर्वापादितविरुद्धशक्त्यन्तरेषु बाधकसत्वादुत्सर्गेण न ब्रह्मणि प्रसङ्गः।

यद्वा—वेदगता सर्वार्थप्रकाशनशक्तिः स्वाश्रयोपादाननिष्ठा प्रकाशशक्तित्वात्। या या प्रकाशनशक्तिः सा सा स्वाश्रयोपादानवर्तिनी यथा दीपगता अर्थप्रकाशनशक्तिः तदुपादाने वह्नाविति विवक्षणीयम्। नातो जलाहरणादिशक्तिमादाय व्यभिचारः। उपादानता च कार्याभिन्नकारणत्वम्। आवरणरूपतया नीहारेत्यादिश्रुतिसिद्धे उभयवादिसिद्धे अज्ञाने प्रकाशनशक्तेर्बाधात्। तदन्यवेदोपादाननिष्ठत्वस्य सिद्ध्या फलतो ब्रह्मसार्वज्ञसिद्धिः। "तस्यैव ज्ञानशक्तिविवर्तत्वात् नामप्रपञ्चस्य" इति **पञ्चपादिकापि** एतदभिप्राया। ननु यो यःज्ञानशक्तिविवर्तः स स तदीयप्रकाशनशक्तिमानिति नियमाभिप्राया, इत्थमेव विवरणे तदभिप्रायवर्णनात्। नातस्तथाविधानामपि गगनादीनामर्थप्रकाशनशक्तिमत्ताप्रसङ्गः। बाह्यागमानामित्यादिकमपि न विचारसहम्। तथाहि—बाह्यागमार्थाः किमत्यन्तासन्तः इति तवानुमतम्, किं वा अनिर्वाच्या इति, यद्वा—तज्जन्यज्ञानमन्यथाख्यातिरेवेति। आद्ये अत्यन्तासता ब्रह्मणः संसर्गोऽस्ति, न वा? नाद्यः। आद्ये तदवभासकत्वस्य ब्रह्मण्युपगमेऽपि न क्षतिः। न चैवं भ्रान्तता। अत्यन्तासत्त्वेन जानतो भगवतस्तदयोगात्। द्वितीये तु त्वन्मतेऽपि ब्रह्मणः सर्वज्ञत्वानुपपत्तिः। सत्सर्वज्ञतैवास्माकमभिमतेति चेत् ममाप्यसद्विलक्षणसर्वज्ञत्वमेवाभिमतमित्यस्तु। बाधकबलादिवशेनोत्सर्गप्रवृत्तिः। द्वितीये त्वनिर्वचनीयं तत् अनिर्वचनीयत्वेनैव जानतो भगवतः शुक्तिरजतमनिर्वाच्यमिति जानतामन्येषामिव न भ्रान्तत्वापत्तिः।

८

न तृतीयः, तादृशागमजन्यप्रतीतिविषयो यादृशविशिष्टार्थः तादृशतादृशविशिष्टार्थप्रकाशनशक्तिमत्यपि ब्रह्मणि भ्रान्तताया अप्रसक्तेः। यादृशयादृशविशिष्टार्थप्रकाशनशक्तिः वेदगता सा सर्वापि स्वाश्रयोपादाननिष्ठा विशिष्टार्थप्रकाशनशक्तित्वात्। या यादृशविशिष्टार्थप्रकाशनशक्तिः सा तदाश्रयोपादानगता इत्याद्यनुमानस्यैवोक्तभङ्ग्या विवक्षितत्वात्। ब्रह्मण्यज्ञताप्रसङ्गस्तु न, मूढत्वस्यापादकाभावात् वेदगतमज्ञानं स्वाश्रयोपादाननिष्ठम्, कार्यगताज्ञानत्वादित्यादिकं तु श्रौतबाधादप्रयोजकत्वाच्च हेयम्। किं च जन्मादीत्यादिकं च न सत्। पूर्वोक्तजगज्जन्मादिकर्तृत्वनिर्वाहाय सार्वज्ञदृढीकारस्यावश्यकत्वात् जगत्कर्तुरन्यत्वशङ्कानिरासाद्यर्थं तादृशलक्षणविवक्षा आवश्यिकीत्यादिकं च प्रागेवोपपादितमिति। तन्न। तथाहि—वेदगता प्रकाशनशक्तिः किं ज्ञानजननशक्तिः उतावरणनिवर्तनशक्तिः। आद्ये ब्रह्मण्यपि सैव सिद्ध्येत्। अन्ते आश्रयासिद्धिः। परंपरासंबन्धेन वेदगतत्वान्नाश्रयासिद्धिरिति चेत्। किं येन संबन्धेन शक्तिः कार्यगता तेनैव संबन्धेन तस्याः कारणगतत्वं विवक्षितम्। उत येन केनचित्संबन्धेन। ब्रह्मणि ज्ञानजनकत्वमात्रसिद्धिप्रसङ्गात्। न द्वितीयः। उत्सर्गोक्तिविरोधात्। न ह्युदकाहरणप्रकाशनशक्त्योर्मृत्पिण्डब्रह्मविद्यासु परंपरासंबन्धेनापि बाधिताः। ज्ञानजनकत्वेनार्थान्तरत्वाच्च विशेषानुमानेऽपि अविद्यावरणनिवृत्त्यनुकूला शक्तिरित्यत्र अनुकूलत्वं किं साक्षात्परंपरया वा?। नाद्यः। आश्रयासिद्धेः

साध्यवैकल्याच्च। न द्वितीयः। सिद्धसाधनात् वेदतज्जन्यवृत्तिद्वारा तत्सिद्धेः। एतेन पक्षधर्मताबलमप्यनवकाशीकृतम्। अत एव दृष्टान्तोऽपि विषमः। किं चावरणनिवृत्तिशक्तिमात्रेण न सार्वज्ञ्यमपि। जीवस्यैवावरणं न ब्रह्मण इति चेत्। अत्राहुः—ब्रह्मणो वेदकर्तृत्वे वेदानां पौरुषेयत्वापत्तिरिति अबुद्धिपूर्वकमेव वेदकारणत्वं ब्रह्मण इति परकीयाभिप्रायमनुरुध्यमानाः अस्तु वेदप्रणेतृत्वेन भगवतः सर्वज्ञता, तथापि वेदोपांदानतयैव सा सिद्ध्यतीत्यभिप्रायेण पञ्चपादिकायां नामप्रपञ्चस्य ब्रह्मोपादेयत्वं निःश्वसितश्रुतेः पराभिमतश्चार्थो दर्शितः। तथा च श्रुतिः निश्वसितमेतद्यदिति। यथा प्रेक्षारहितैव लोके निश्वासस्य प्रवृत्तिः तथाऽस्यापीति न सापेक्षता दोषः। नन्वेवं सति कथं सर्वज्ञता तस्यैव ज्ञानशक्तिविवर्तत्वात् प्रपञ्चस्येति तद्विवरणेऽपि स एवार्थ उपवर्णितः।

अत्रायमभिप्रायः। असति बाधके कार्यधर्माणां कारणगतत्वमुत्सर्गः। प्रकृते नानाविधार्थप्रकाशनशक्तिः वेदनिष्ठा तदुपादानब्रह्मण्यपि स्वीकर्तुं युक्ता बाधकादर्शनात् प्रकाशनशक्तिशब्देन च तत्तदर्थव्यवहारे कारणतावच्छेदकमुद्रया प्रयोजकं तत्तदर्थविषयकत्वमुच्यते। कारणतावच्छेदकधर्मस्यापि शक्त्यवच्छेदकतया शक्तिव्यपदेशयोग्यत्वात्। न चेदमपि न वेदनिष्ठम्। किं तु तज्जन्यज्ञाननिष्ठमेवेति वाच्यम्। शाब्दबोधनिष्ठाया अपि विषयतायाः तत्करणशब्दगतत्वमस्तीति प्राचीनैरुपगमात्। यदाहुः—व्यापारानुबन्धिनी विषयतेति। एवं च या तावदाकारताख्या वृत्तिविषयता तन्निरूपकं वेदजन्यज्ञानं तद्गता सा तत्करणे वेदेऽभ्युपेयते। तदेतदुक्तन्यायेन तदुपादाने परब्रह्मण्यपि। तथा च वृत्तीनामिव ब्रह्मणोऽप्यतीतानागतविषयनिष्ठाकारताख्यविषयतानिरूपकत्वं निराबाधमेवेति न सार्वज्ञहानिः। बाधकबलाच्च बुद्धागमार्थविषयकत्वं न ब्रह्मण्युपेयत इति न कोऽपि दोषः।

एवं ह्यसारानुबन्धिविषयतावादरीत्या ब्रह्मणः सार्वज्ञ्ये समर्थिते द्वारानभ्युपगमेऽपि न क्षतिः। तन्मत इव मतान्तरेऽपि ब्रह्मण्यतीतादिनिष्ठकारणताख्यविषयतोपगमादिति। आवरणनिवृत्त्यनुकूला शक्तिरित्यादि प्राचांग्रन्था अप्येतदभिप्राया एव। साक्षात्संबन्धेनैव तस्याप्युपादानगतत्वं साध्यमिति न प्रागुक्तसंबन्धविकल्पाश्रयो दोषः। एवमविशिष्टः प्राचांग्रन्थः सुधीभिरविरुद्धतया स्वयमुन्नेयः। प्रकारान्तरं चान्यत्र द्रष्टव्यम्।

यत्तु—सर्वज्ञत्वादिना कारणत्वं न जीवव्यावृत्तं कार्यं, जीवब्रह्मणोरभेदादिति। तदसत्। असर्वज्ञे जगत्कारणतायाः कथं चिदुपगमे तत्परत्वे च वेदान्तानां सांख्यसिद्धान्तापत्तेः। तदभेदमात्रस्य सांख्यमताविरुद्धतया तदनुरोधेन विश्वमिथ्यात्वस्याप्यसिद्धिरित्यादिकं पूर्वसूत्र एवोक्तम्। **पञ्चपादिका**नुसारेण च न ब्रह्मणः पूर्वसूत्रोक्तं जगज्जन्मादिकर्तृत्वं संभवति। प्रागुक्तरीत्या ब्रह्मणः सार्वज्ञासंभवात्। वेदकर्तृत्वे वेदानामपौरुषेयत्वव्याघातश्चेति पूर्वः पक्षः। मा भूद्वेदकर्तृत्वं ब्रह्मणः तदितरनिखिलकार्यकर्तृत्वं वेदसाधारणनिखिलकार्योपादानत्वं च लक्षणे भवतः। तथा चोक्तरीत्या सार्वज्ञसिद्ध्या वेदेतरनिखिलकार्यकर्तृत्वं वेदसाधारणनिखिलकार्योपादनत्वं च पूर्वसूत्रोक्तं नानुपपन्नमिति सिद्धान्त इत्यादिकं स्वयमूह्यम्।

अथवा—वेदनित्यत्वात् ब्रह्मणो विश्वयोनिता नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यत इति **कल्पतरू**क्तिरपि साधीयसी। **यत्तु**—वेदानां नित्यत्वेऽपि नेयमाशङ्का संभवति निखिलकार्योपादानतायास्तत्कर्तृतायाश्च ब्रह्मलक्षणत्वस्य पूर्वसूत्रे प्रतिपादनात्। अन्यथा सिद्धान्ते अविद्यादीनां स्वरूपत एवानादितया लक्षणस्यासंभवदु:स्थतापत्तिः। किं च श्रुतीनां परस्परविरोधपरिहारेण यावद्विकारमिति सूत्रोक्तभिन्नत्वादिसाधारणहेतुभिः ब्रह्मेतरसर्वानित्यत्वप्रतिपादके द्वितीयाध्याय एवेदं सङ्गतमिति। **तदसत्**। वेदनित्यत्वादित्यस्य वेदानामपौरुषेयत्वादित्यर्थात्। यद्वा—नित्यत्वात् प्रामाण्यादित्यर्थः। आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते इति सूत्रे अनित्यशब्देन नित्यशब्दोदितप्रमाणभिन्नत्वोक्तेरित्यपि वदन्ति। आनुषङ्गिके चार्थे न पृथक्संगतत्यपेक्षेत्युक्तत्वाच्च जन्यत्वमभ्युपेत्यैवोक्तरीत्या पूर्वपक्षस्य दर्शिततया न किंचेत्यादि दूषणावकाशः।

यत्तु—जन्मादिसूत्रे विशेषेणैकरूपेणैत्र हेतुता विवक्षणीयेति वेदं प्रत्यपि ब्रह्मणो वियदादि प्रतीव कर्तृता कुतो नेति। तदसत्। बाधकबलेन वेदातिरिक्तनिखिलकार्यकर्तृताया एव तत्र विवेकौचित्यात्। नन्वेवमपि विवरणरीत्या वेदपौरुषेयत्वाभावेऽपि निबन्धरीत्या तद्दुर्वारमिति चेन्न। स्वतन्त्रपुरुषेच्छोदितत्वं पौरुषेयत्वं तच्च वेदे नानुमतम्। बुबोधयिषापूर्वकमुच्चारणमात्रं च न तथेति तदभिप्रायादित्युक्तत्वात्। अस्य महतो भूतस्येत्यादेः अनुमानरूपता नेति तु ममाप्यनुमतम्। परं त्वेतद्वाक्यावगतबुद्धिपूर्वकोत्पत्तिमात्रं तु सापेक्षत्वनिरासे हेतुर्भवत्येव। वेदसाधारणनिखिलकार्योपादानता च अस्मात् श्रुत्यन्तरेभ्यः सुलभा। **यदपि** केनचिन्मन्दमतिनोक्तम्—यः सर्वज्ञः सर्ववित् इत्यादिश्रुतिष्वभीष्टदोग्ध्रीषु सतीष्वप्येवं शून्यगृहे भिक्षाटनोक्तिरुन्मादमेव व्यनक्ति इति, तन्न। उक्तरीत्या सार्वज्ञ्यासंभवेन सर्वकर्तृत्वानुपपत्त्यावश्यकत्वाच्च। तस्मात्सर्वतन्त्रस्वतन्त्रेषु दोषदृष्टिरेवोन्मादविजृम्भितेति सुव्यक्तम्।

यत्तु—वेदानामशेषार्थप्रतिपादकत्वे तदधिकविषयाप्रसिद्ध्या बाधः माधुर्यविशेषादीनां स्वरूपतः प्रतिपादनं वेदैर्न संभवतीत्युपगमे च न सार्वज्ञ्यसिद्धिरिति। तत्प्रागेव निरस्तम्।

ननु—सूत्रोपात्तशास्त्रयोनित्वस्य निबन्धमते सार्वज्ञ्यबाधकानिरासकतया आभिप्रायिकहेतोश्च जन्मादिसूत्रेऽपि संभवादिदं वर्णकं निष्प्रयोजनमेवेति चेन्न। आद्यसूत्रे सिद्धव्युत्पत्तिरूपस्य सिद्धान्तहेतोः सूत्रानुक्ततायाः त्वन्मतेऽपि सम्यात्। सिद्धपरब्रह्मशब्दादिना तत्सूचनमस्तीति वत् पराभिमतशास्त्रयोनिताबोधकश्रुतिपर्यालोचनया परेणाप्यवश्याभ्युपेयमर्यादया ममापि तन्निर्वाह इति समाधानस्य शास्त्रयोनित्वहेतूत्त्या सूचितत्वस्य मन्मतेऽपि संभवादित्यादि दिगिति सर्वमनाकुलम्।

भाष्याक्षरार्थस्तु.......................।

एतेन शास्त्रस्य योनिरिति व्याख्यानमनुपपन्नम्। प्रकृतानुपयोगात्। नहि शास्त्रकारणत्वं जगत्कारणत्वे हेतुः व्याप्त्यदर्शनात्। पूर्वसूत्रे जगत्कारणत्वेन प्रतीतं सार्वज्ञ्यं ब्रह्मणो वेद-

कारणत्वेन दृढीक्रियत इति चेन्न। वेदस्यापि जगदन्तर्गतत्वात्। कथं चानन्तपदार्थकारणत्वेन न स्फुटीभविष्यति । अथ जगत्कारणत्वं प्रधानादिभ्युदासेन ब्रह्मण्येव साधयितुं हेतुत्वेनोपन्यस्तं सार्वज्ञ्यं शास्त्रयोनित्वेन साध्यत इति चेन्न । अप्रसिद्धिप्रसङ्गात् । नहि ब्रह्मणो जगत्कारणत्वमनङ्गीकुर्वाणो वेदकारणत्वमङ्गीकरोति। आगमेन साध्यत इति चेत्तर्हि जगत्कारणत्वमेव तेन किं न साध्यते। ईक्षत्यधिकरणादिना जन्मादिसूत्रस्य पुनरुक्तताप्रसङ्गश्च। जगत्कारणत्वेऽपि सर्वज्ञत्वं न सिध्यति वेदाकर्तृत्वादित्याशङ्क्य इदमुच्यत इति चेन्न । तथा सति प्रतिज्ञामात्रत्वप्रसङ्गात्। वियदादिविषयेऽप्येवमाशङ्काप्रसङ्गात्। वियदधिकरणादौ सापि निराकरिष्यत इति चेत्; तर्हि तेनैवेदं गतार्थं स्यात् । किंच वेदाकर्तृत्वे सार्वज्ञ्यं न संभवतीति शङ्कैव निर्दला । नहि तत्रैव ज्ञातव्यमिति नियमोऽस्ति । किंच वेदकर्तृत्वं कथं सार्वज्ञसाधकम्? प्रागुक्तरीत्येति चेत्। किमिदं वेदप्रणेतृत्वं अर्थमुपलभ्य रचयितृत्वं चेत् वेदानां पौरुषेयत्वापत्तिः। उच्चारयितृत्वमात्रं चेत् सार्वज्ञ्यासिद्धिरुपाध्यायवत् । वेदः रज्जुभुजङ्गवद्ब्रह्मण्यारोपित इति चेत् कथं तर्हि पाणिन्यादिदृष्टान्तकम्। नहि पाणिन्यादिषु आरोपितं व्याकरणम् । शक्तेरपि ब्रह्मणि तात्विकत्वप्रसङ्गश्च । किंच वेदे करणशक्तिः ब्रह्मणि च कर्तृत्वशक्तिरिति किं केन कुत्र वेदमुपलब्धम् । आरोप्यगता शक्तिरधिष्ठाने वास्तवीत्यादिका **जयतीर्थोक्ति**रपास्ता ॥

अथवा ब्रह्मणो जगज्जन्मादिकारणत्वं क्षित्यङ्कुरादिकर्तृजन्यं कार्यत्वादित्याद्यनुमानसिद्धम्। तथाच प्रमाणान्तरावगते ब्रह्मण्यागमतात्पर्यायोगात् समन्वयलक्षणो विचारो नारब्धव्यः। नन्विदमयुक्तम् । कारणताया अनुमानगम्यत्वेऽपि प्रत्यगभेदादेः तदगम्यतया तत्सिध्यर्थमेव वेदान्तानां प्रत्यगभिन्नब्रह्मपरताया निर्णायकन्यायानुसंधानस्यावश्यकत्वादिति चेन्न यतोऽनुमानादीश्वरः सिद्धयन् जीवादिव्यावृत्त एव सिद्धयति । न च तेन जीवाभेदः शक्यः उपनिषदां सहस्रैरपि बोधयितुं येनोपनिषदां तत्परता स्यात् । किंतु तदभेदेन जीवा उपास्या इत्यत्रैव श्रुतीनां तात्पर्यं वाच्यमिति क सिद्धान्त्यभिमतसमन्वयावकाशः? प्रत्यक्षानुगृहीतं च जीवव्यतिरिक्तेश्वरानुमानं नाहमीश्वर इति प्रत्यक्षस्य सार्वजनीनत्वात्। किं चाम्नायस्य प्रामाण्यमीश्वरसिद्धयधीनम् । यदाह भगवान् परमर्षिः— तद्वचनादाम्नायप्रामाण्यमिति । न च वेदानां कूटस्थनित्यत्वादपौरुषेयत्वं, अन्यत्र दूषितत्वात् श्रुतिविरोधाच्च । आप्तवक्तृकत्वगुणशून्यत्वेन प्रामाण्यायोगाच्च। वक्तृयथार्थज्ञानवत्ताहि शाब्दबोधे गुणः । तस्मादनुपपन्ना सिद्धान्त्यभिमता ब्रह्मजिज्ञासा । न चौपनिषदत्वश्रुतिविरोधः । उक्तानुमानादिगम्यताया दुरपह्नवतया उक्तश्रुतेरर्थान्तरत्वादिति प्राप्ते ।

नानुमानगम्या जगत्कारणता अनुमानस्य विचारासहत्वात्। तथाहि—क्षित्यादीनां कार्यत्वस्य प्रामाणिकत्वेऽपि न तेषां कर्तृजन्यता । उक्तहेतुसाध्ययोः व्याप्तिग्राहकमानाभावात् । न च कुलालाद्यन्वयव्यतिरेकानुविधायित्वस्य घटादौ दर्शनात् घटत्वाद्यवच्छिन्नं प्रति कुलालादेः कारणता वाच्या। तथाचानन्तकार्यकारणभावापत्तिरिति तद्वारणाय कार्यत्वावच्छिन्नं प्रति कृतित्वादिना एक एव कार्यकारणभावः कल्पनीयः । एवं च क्षित्यङ्कुरादावपि कृतिजन्यता आवश्यकी

कीत्यस्मदादीनां तदाश्रयत्वस्याभावात् जगत्कर्तुर्जीवातिरिक्तस्य सिद्धिरप्रत्यूहेति वाच्यम्। एवंपरे कुलालमन्तरेणापि घटोत्पत्त्यापत्तेः दुर्वारतापत्तिः, आदिपुरुषकृतेः सर्वदैवानपायात्। अथ तस्याः सत्वेऽपि असमवायिकारणकपालद्वयसंयोगाद्यभावात् न घटोत्पत्तिरापादयितुं युक्तेति चेत् तर्हि घटे कुलालकृतेः कारणत्वाभ्युपगमो व्यर्थः। अथ तामन्तरा न विजातीयसंयोगोत्पत्तिरिति सा तत्र कारणमिति चेत् हन्त तर्हि विजातीयसंयोगे कृतिः कारणमित्यायातम्। सापि च कुतो न कुलालं विनोत्पद्यते। पारमेश्वरकृतेः सार्वदिकत्वादिति। अथ तत्र विजातीयक्रिया कारणम्। साच न कुलालं विनेति चेत्। किं विजातीयक्रियां प्रति कुलालकृतित्वेन कारणता। किं वा कृतित्वेन। नाद्यः; त्वदभिमतकार्यकारणभावासिद्धेः। न द्वितीयः। पूर्वोक्तरीत्या तादृशक्रियाया अप्यापादनात्। तस्मादेवं विजातीयकार्यातिप्रसङ्गवारणाय विशिष्यैव कार्यकारणभाव एव वाच्य इति न क्षित्यादीनां कृतिजन्यत्वसाधकानुमानावकाशः। एवमनुमानान्तरदूषणमपि सुधीभिरुन्नेयम्। न चैवं वेदप्रामाण्यासिद्धिः मोहाजन्यत्वमात्रेणैव तत्सिद्धेः। नचास्य स्वतन्त्रपुरुषप्रणीतता। येन पुरुषदोष आशङ्क्येतेत्यादि दिगिति सिद्धान्तः।

एतेन शास्त्रं योनिः प्रमाणं अस्येति विग्रहाश्रयणेन पूर्वोक्तलक्षणस्यानुमानगम्यतोपमर्देन आगमगम्यत्वोपदर्शनार्थमिदमधिकरणमित्यस्मन्मतमित्यनूद्य यदुक्तं **व्यासतीर्थेन**-प्रमेये विशेषाभावे प्रमाणे विचारायोगः। किं च शास्त्रं किं सगुणत्वादिविशिष्टे प्रमाणम्, निर्विशेषे वा। नाद्यः विशिष्टस्यातात्त्विकतया वेदान्तानामपि तात्त्विकप्रामाण्यानुपपत्तेः। नान्त्यः, विचारस्य इदमित्थमिति प्रकारविशेषालीढवस्तुनिर्धारणफलस्य अतादृशे प्रवृत्त्यनुपपत्तेः शास्त्रस्यापि विशेषपुरस्कारेणैव वस्त्ववबोधनहेतुत्वात्। तथाऽऽह परः—

सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते।

मिथ्याधर्मविधातुश्च शास्त्रस्यैवाप्रमाणता। इति।

किंच यत्सत्यं नैव तद्वेद्यं यद्वेद्यं तच्च नैव सत् इति हृदयम। कुत्रार्थे शास्त्रमानता। फलव्याप्यत्वं वेद्यत्वम् न तद्ब्रह्मणि। वृत्तिव्याप्यत्वं तु तत्राप्यस्तीति तु परं प्रत्यसिद्धम्। नित्यातीन्द्रियेषु वाद्यसिद्धं चेति अप्रयोजकता च। अनुमानवत् दुरागमस्यापि निरासप्रतीतेः नानुमानमात्रनिरासपरं सूत्रमिति।

तदपास्तम्। श्रुत्यनुमानग्राह्ययोः कारणविशेषस्य दर्शितत्वात्। शास्त्रं च जगत्कारणत्वोपलक्षिते प्रत्यगभिन्नेवस्तुनि प्रमाणम्। उपलक्ष्यस्य महातात्पर्यविषयत्वाच्च न शास्त्रप्रामाण्यादिक्षतिः। निर्विकल्पकस्याप्यविद्यानिवर्तकत्वं शब्दजन्यत्वं चेत्यादिकमाद्याधिकरण एव प्रपञ्चितम्।

एवं वेद्यत्वं वृत्तिव्याप्यत्वं तच्च ब्रह्मण्यप्रत्यूहं फलव्याप्यत्वं प्रतिवाद्यसिद्धमित्याद्युक्तावपि न प्रकृतक्षतिः मिथ्यात्वे हेतूकृतं च तद्यथा नासिद्धं तथाऽन्यत्र विवेचितम्। विरुद्धागमवेद्यतानिरासश्च स्मृत्यधिकरणेन गतार्थ इति नेह चिन्त्यते। अधिकमग्रे वक्ष्यामः।

दीक्षितश्रीचरणास्तु—तं त्वौपनिषदं पुरुषं पृच्छामि इति श्रुतिः ब्रह्मण औपनिषदत्वं प्रतिपादयति नवेति संशये, न प्रतिपादयति । वैशेषिकोक्तानुमानगम्यत्वात् ब्रह्मणः । नच कार्याप्रयोजका अपि बहवो गुणाः श्रुतिसिद्धाः स्वीक्रियन्ते ते तैर्लिङ्गैर्न सिद्ध्यन्तीति वाच्यम् । तावता सगुणेश्वरस्यौपनिषदत्वसिद्धावपि निर्विशेषप्रत्यक्चैतन्यब्रह्मणस्तदसिद्धेः । तत्र सकलविशेषाभावस्य प्रपञ्चमिथ्यात्वानुमानतः सिद्धिः सच्चिदानन्दरूपतायाश्चाहमस्मि अहमुपलभे इत्यादिप्रत्यक्षाभ्यां निरुपाधिकप्रेमास्पदत्वेन च सिद्धिः । सर्वशरीरगतजीवैक्यस्य च सर्वेषु कर्णपुटेषु श्रोत्रैक्यस्येव लाघवात् सिद्धिरिति प्राप्ते । तर्कानुमानयोः प्रतितर्कानुमानाभ्यां सत्प्रतिपक्षतया न कस्याप्यर्थस्य सिद्धिः । निरतिशयानन्दे च न मानान्तरस्य प्राप्तिरिति सिद्धान्त्यभिमतं ब्रह्मोपनिषदेकगम्यम् इति सिद्धान्त इत्याहुः ।

यत्तु — पूर्वपक्षोऽयमनुपपन्नः । अशनायाद्यतीतस्य रूपस्य सिद्धान्त्यभिमतस्य प्रत्यक्षेणासिद्धेः । विशिष्टस्वरूपस्य च कार्यलिङ्गकानुमानेनापि सिद्धतया तत्र प्रत्यक्षोपन्यासवैयर्थ्यम् । किं च तदुपन्यासःस्वरूपस्य प्रत्यक्षसिद्धतया औपनिषदत्वाभावसाधनार्थ एव पर्यवसन्नः । मिथ्यात्वानुमाननिराकरणेन च तस्यैवौपनिषदत्वं समर्थितम् । नतु ब्रह्मणः । वस्तुतो निरतिशयानन्दात्मकं स्वरूपं तत् प्रत्यक्षादिसिद्धम् । निरतिशयत्वविवक्षायां च तस्यैवौपनिषदत्वप्रसङ्गः । प्रत्यक्षावलम्बनेन पूर्वपक्षे संगतिरप्यनुपपन्नेति ।

तदसत् । यतोऽशनायाद्यतीतत्वं यदि परमार्थतोऽशनायाद्यतीतत्वं तन्मिथ्यात्वानुमानेनैव सिद्धम् । यद्यशनायाद्यारोपाविषयत्वं तद्ब्रह्मणि सिद्धान्तिनोऽपि नानुमतम् । प्रत्यक्चैतन्ये अशनायाद्यध्यासस्योपगमात् । कार्यलिङ्गकानुमानेन यद्यपि विशेष्यं सिद्ध्यति तथापि स्वरूपमात्रसिद्धौ न तदपेक्षा । किं तु कारणताया एव ।

यद्वा—कार्यलिङ्गकानुमानेन जीवातिरिक्तेश्वरस्य सिद्धिः । किं तु प्रत्यक्षसिद्धप्रत्यक्चैतन्यरूपस्यैव अतिरिक्तधर्मिकल्पनायां गौरवात् अतिप्रसङ्गश्च उपाधिभेदमालम्ब्य परिहरणीय इति सूचनाय तत्र प्रत्यक्षोपन्यासः । सिद्धान्ते शोधितस्य प्रत्यक्षत एव ब्रह्मरूपतया 'किंचेत्यादि नतु ब्रह्मण' इत्यन्तमत्यन्तमौढ्यादेव । अत एव निरतिशयत्वविवक्षायां तस्यौपनिषदत्वप्रसङ्ग इति निरस्तम् । नाप्युक्तरीत्या पूर्वपक्षः पूर्वसूत्रे जीवे जगत्कारणत्वासंभावना ब्रह्मणि तत्संभावना च अस्य यत इति पदाभ्यां दर्शिता । ततो वैशेषिकाद्यभिमतं कार्यलिङ्गकानुमानमेवोपन्यस्तमिति भ्रमः स्यात् । तद्वारणाय तादृशभ्रमबीजभूतं पूर्वपक्षं निरसितुमिदमधिकरणमिति सङ्गतिप्रदर्शनपरग्रन्थविरोधः । प्रत्यगात्मनः प्रत्यक्षसिद्धत्वेऽपि वैशेषिकाद्यभिमतानुमानेन जगतः कारणस्य सिद्धेः शास्त्रं न तत्परमिति शङ्काया अनपवादात् । ततश्च कारणस्यानुमानसमधिगम्यत्वेऽपि निर्विशेषप्रत्यक्चैतन्यस्य शास्त्रयोनित्वं निष्प्रत्यूहमेवेति कथमेतत्पूर्वपक्षावतार इति शङ्कायां यथा कार्यलिङ्गकानुमानेन कारणसिद्धिस्तथा मोक्षजनकज्ञानविषयस्य प्रतीचः तत्रोपलक्षणीभूतानामानन्दादीनां च यथायथं ........ शो न भाष्यानुगत इति ।

**तदपि न ।** पूर्वसूत्र एवैवंजातीयकं शास्त्रमुदाहरता इति भाष्येण सदेव सोम्येदमग्र आसीत् इत्यादिशास्त्रस्यापि जन्मादिसूत्रोदाहरणत्वोक्त्या जिज्ञास्ये प्रत्यगभेदादेरप्युपक्षिप्तत्वेन उक्तपूर्वसिद्धान्तयोरपि सूचितत्वात् । जन्मादिसूत्रे चैवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तसर्वज्ञरूपकारणविषयाण्युदाहर्तव्यानीत्युक्तम् । तत्र च शुद्धत्वं परमार्थतः कर्तृत्वादिधर्मशून्यत्वं विवक्षितम् । यथा च जन्माद्युपादानेन कार्यलिङ्गकानुमानं बुद्धौ विपरिवर्तते, अस्येति दृश्यत्वपरिच्छिन्नत्वादिकीर्तनेन मिथ्यात्वसाधको हेतुरपि तथा, यत इत्यनेन सच्चिदानन्दरूपताचेति न किञ्चिदवद्यम् । जन्मादीत्यादिशब्देन स्थित्यादेरिव दृश्यत्वादेरपि संग्रहः । अनुमानशब्दस्तु साधारण इति न किंचिदवद्यम् ।

वस्तुत एतद्वर्णकार्थस्य पूर्वसूत्र एव प्रसङ्गादुपदर्शितस्य अत्र दीक्षितैः प्रपञ्चितत्वात् नोद्भाव्या तदुक्तिः । तथा हि—एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनमीश्वरकारणवादिनो मन्यन्त इत्यभिधाय नन्विहाप्यनुमानमेवोपन्यस्तमिति जगत्कारणतासाधकानुमानं पूर्वपक्षीकृत्य बीजमाशङ्कितम । वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः । नानुमानादिप्रमाणान्तरनिर्वृत्ता इति सिद्धान्ताभिप्राय उद्घाटितः । अनेन हि वाक्येन शुद्धबुद्धनित्यमुक्तादिस्वभावपरमानन्दवाचिब्रह्मशब्दयोगात् एवं भूतवस्तुसिद्धिर्नानुमानादिनेति सूचनात् पूर्वपक्षः प्रमाणान्तरेण तत्सिद्धिपर्यन्त इत्यवगम्यते । सत्सु तु वेदान्तवाक्येष्वित्यादिना च तुशब्दस्यैवकारतुल्यार्थकत्वात् तद्व्यतिरेकिवेदान्तवाक्यविरोध्यप्युक्तमिथ्यात्वसाधकानुमानादिकं न स्वार्थसाधनक्षममिति सूच्यते । पूर्वपक्षाभिप्रायश्च भूतवस्तुनो मानान्तरगम्यतानियममाश्रित्य "ननु भूतं वस्त्वि"त्यादिना दर्शितः । न चैतादृशभाष्यफक्किकाः प्रमाणान्तरेण निर्विशेषत्वसिद्धेरनुमानाधीनत्वे स्वार्थे समन्वीयन्ते । तस्मात् भाष्यस्वरसानुरोध्येव दीक्षितोक्तप्रकारः ॥

॥ श्रीः ॥

# ॥ तत्तु समन्वयात् ॥

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥

पूर्वाधिकरणे ब्रह्मणि शास्त्रस्य प्रामाण्यममिहितम् । तदिहाक्षिप्य समर्थ्यत इति शास्त्राध्यायार्थादिसंगतिः । पूर्वपक्षस्तु—नोक्ते ब्रह्मणि शास्त्रं प्रमाणम् । अनधिगताबाधित-प्रयोजनवदर्थपराणामेव शब्दानां प्रामाण्यावगतेः । यदाहुः—आम्नायस्य क्रियार्थत्वादानर्थक्य-मतदर्थानां तस्मादनित्यमुच्यत इति । ननु प्रयोजनवदर्थप्रतिपत्तिहेतुताशून्यानामपि चक्षुरादीनां प्रामाण्यदर्शनान्नायं नियम इति चेन्न । चक्षुरादीनां तथात्वेऽप्याम्नायस्य फलवत्त्वमावश्यकं पुरुषार्थापर्यवसायित्वे तस्य काकदन्तबोधकवाक्यवदनुपादेयत्वापातात् । सतोऽप्यफलार्थकत्वस्य तत्परत्वानुपपादकत्वेन फलसहितार्थप्रतिपादने तात्पर्यावसायात् अन्यथा अग्निर्हिमस्य भेषजमिति वाक्यमपि प्रतीतार्थपरं स्यात् । एवं च सिद्धवस्तुप्रतिपादने तात्पर्याभावेन वेदान्तानां नोक्ते ब्रह्मणि प्रामाण्यम् । किं च सिद्धवस्तुत्वावच्छेदेन प्रमाणान्तरवेद्यत्वं ब्रह्म च सिद्धमिति प्रमाणान्तर-वेद्यता वाच्या । तथा चानधिगतार्थत्वाभावादिति न तत्र प्रमाणं शास्त्रम् ।

यत्तु—निष्प्रयोजनत्वाशङ्कायाःत्वन्मते आद्यसूत्र एव जिज्ञासाशब्देन परिहृतत्वात् लौकिककार्यपरवाक्येऽपि सापेक्षत्वदर्शनेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वाच्च नायं पूर्वपक्षो युक्त इत्युक्तम्। तन्न। एतदधिकरणे निर्णेष्यमाणस्यैव प्रथमसूत्रे ब्रह्मजिज्ञासापदेन सूचनेऽपि एतदधि-करणवैयर्थ्यानवकाशात् । किंच त्वदीयभाष्येऽपि तदधीनत्वं न्यायेन सिद्धम् । अन्यत्र प्रसिद्धानां ब्रह्मणि मुख्यत्वमधिकरणान्तरे । उक्तं च द्युभ्वाद्यधिकरणे चन्द्रिकायाम् । आनन्दमयाधिकरणे—प्रादुर्भावो हरेर्जनिः— इत्यनुव्याख्यानोक्तिरत्रत्यसिद्धान्तसिद्धजन्यत्वाभिप्राया, लौकिकेत्याद्यपि न युक्तम् । नहि वयं कार्यपरवाक्यानां प्रमाणान्तरासिद्धार्थपरत्वनियमं ब्रूमः । किंतु सिद्धस्य वस्तुनः प्रमाणान्तरवेद्यत्वम् । न च कार्येऽपि प्रमाणान्तरवेद्यत्वनियमस्य लोके दर्शनात् तदप्रयोजकमिति वाच्यम् । कार्यमात्रस्य तथात्वादर्शनात् धर्मादौ व्यभिचारात् । लौकिककार्ये तथादर्शनं त्वकिं-चित्करम् । न च वैदिकं सिद्धपरवाक्यमस्ति । येन तत्र व्यभिचारः शङ्क्येतापि । (युक्ता) सात्र जिज्ञासापदेन परमानन्दरूपब्रह्मजिज्ञासासंभवं प्रदर्शयता निरस्तायामप्यप्रयोजकत्वशङ्कायां कथमिह पुनस्तदाशङ्कोदयः । अनुव्याख्याने तु-सूत्राक्षरसूचितायाः प्रादुर्भावलक्षणायाः जन्माधि-करणान्तरसिद्धाया अभ्युपपादनं शिष्यबुद्धिवैशद्याय युक्तमिति । तन्न । प्रत्यक्षविरोधेन कर्तृत्वभोक्तृ-त्वाद्यनर्थविधुरप्रत्यगभिन्नब्रह्मतत्त्वप्रतिपादकत्वं न वेदान्तानां संभवति । नाप्यहमिति प्रत्यक्ष-सिद्धात्ममात्रप्रतिपादकत्वम् संशयप्रयोजनयोरभावादिति पूर्वपक्षे अहंप्रत्ययस्य बह्वषु दृष्टविसंवादस्य

आगमार्थप्रतिरोधनाक्षमतया अहंप्रत्यये विलक्षणमुपनिषत्प्रतिपाद्यमात्मतत्त्वं विषयः तदपरोक्षं फलं चाप्रत्यूहमिति सिद्धान्तयुक्तिसूचकं ब्रह्मजिज्ञासापदमित्याचार्यवाचस्पत्युक्तरीत्या कथं ब्रह्मापरोक्ष्योदासीनसिद्धवस्तुविषयस्य सुखदुःखध्वंसतत्साधनातिरिक्तस्य फलत्वमिति शङ्का मा भूदिति एतत्परतया अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्मेत्यादिभाष्यस्यं विभक्तत्वेऽपि प्रकृताधिकरणसिद्धन्तस्यैव तत्रोपजीव्यतया गृहीतत्वेनैतद्वैयर्थ्यानवकाशात् । न चायमपि पूर्वः पक्षः तत्रत्यापरोक्षज्ञानपरज्ञाधातुनिवर्तनीयः । तत्रैव कुतो न कृत इति वाच्यम् । सापेक्षत्वनिबन्धनातत्परत्ववारणायावश्यमारब्धव्येऽधिकरणान्तरे विनिगमकाभावेनात्रापि तत्करणे बाधकाभावात् । उपक्रमादिलिङ्गेषु फलवत्वस्यापि निविष्टतया अत्रापि तदुपपादनस्य सङ्गतत्वात् । वस्तुतस्तु विषयाभावसंबन्धिनः फलाभावनिबन्धनप्रथमसूत्रीयपूर्वपक्षोऽत्रत्यसिद्धान्तन्यायसिद्धार्थसूचनेन ब्रह्मजिज्ञासापदेन निरस्तः । तथाचोक्तं टीकायाम्—न च क्रियासमभिहारेणेदगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यमुपचरितार्थानीति वक्तुमिति । प्रत्यक्षात् श्रुतेः प्रावल्यात्मिका युक्तिरपि श्रुतेरुक्तार्थपरत्वसिद्ध्यधीनैव निर्णीतत्वात् । तात्पर्यवत्या अपि श्रुतेरेव स्वतात्पर्यविषयार्थविरोधिप्रत्यक्षात् प्राबल्यस्यास्मदभिमतत्वात् अन्यथा सूर्यप्रादेशिकत्वादौ दृष्टविसंवादस्य तत्प्रत्यक्षस्य आदित्यो यूप इत्याद्यागमादपि दौर्बल्यापत्तेः ।

एवं चाधिकरणान्तरसिद्ध एव विषयप्रयोजनादिः शिष्यहितैषिणा आचार्येण सुखावगमाय प्रथमसूत्रे निबद्धः । तत्सूत्रे साधारण्येनानुसृतो न्यायोऽपि निर्णीततात्पर्यकायाः श्रुतेः प्रत्यक्षात् बलीयस्त्वमेवेति न काचिदनुपपत्तिः । अन्यथा त्वदभिमतसिद्धव्युत्पत्तिवद्प्रामाण्यादिपरामर्शकप्रथमसूत्रस्थातःशब्देनैव शास्त्रयोनित्वसमन्वयादिपरामर्शसंभवेनोक्तसूत्रद्वयीयपूर्वपक्षस्यापि निराकरणसंभवादेतत्सूत्रद्वयारम्भो व्यर्थ इत्यापद्येत । तथाच सिद्धब्रह्मपरत्वे शास्त्रस्याधिगतार्थत्वनिष्प्रयोजनत्वयोरापत्त्या तस्याध्ययनविध्यापादितप्रयोजनवदर्थावबोधस्य कर्मसमवेतकर्तृदेवताप्रकाशकतया स्ववाक्योपात्तोपासनादिविषयसमर्पकतया वा कार्यानुप्रवेश एव वाच्यः ।

एवं च न देवताधिकरणन्यायेनापि उक्तवस्तुसिद्धिः तस्य प्रमाणान्तराविरोधे सत्येव प्रवृत्तिरिति ।

**सिद्धान्तस्तु**—तत् ब्रह्म शास्त्रयोनि अपूर्वत्वफलवत्त्वादितात्पर्यविषयतानिर्वाहकलिङ्गरूपात् समन्वयात् । न च सिद्धस्य प्रमाणवेद्यतानियमः, मानाभावात् । दर्शनमात्रस्य कार्येऽपि तुल्यत्वात् । न चापूर्वादौ व्यभिचारः । लौकिककार्ये तद्दर्शनेन तत्रापि तस्यापादनीयत्वात् । फलं द्विविधम् - किंचिदप्राप्तं ग्रामादिकं, किंचित्प्राप्तमपि भ्रमवशादप्राप्तत्वेनावगतम् यथा कण्ठमण्यादिकम् । एवं जिहासितं द्विविधम् । यथा वलयितचरणः फणी प्रागहीनः स्वतो हीनश्च चरणाभरणनूपुरारोपितः फणी तत्र ब्रह्मात्मैक्यज्ञानात् प्राप्तब्रह्मप्राप्तिः कल्पितत्त्वेन नित्यहीनकर्तृत्वाद्यनर्थबीजाविद्याहानिश्चोपपद्यत इति ।

यत्तु—कण्ठमण्युपदेशस्य प्राप्तमणिप्राप्तिर्न फलम् । किंतु प्राप्तिज्ञानजस्य सुखस्य प्रागप्राप्तस्य प्राप्तिः मण्यप्राप्तिभ्रमादिजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा फलम् । एवं 'चरणाभरणमिदं न सर्पः' इत्युपदेशस्यापि न निवृत्तसर्पनिवृत्तिः फलम् । किं त्वाभरणज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्य प्राप्तिः सर्पभ्रमजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा । न ह्युपदेशेन मणिः प्राप्तः सर्पो निवृत्त इत्यनुभवः । किंतु प्राप्तिज्ञानाद् भ्रमो निवृत्त इति । न च प्राप्तस्वरूपसुखादन्यत् प्राप्यं सुखं नित्यनिवृत्ताविद्याभ्रमदुःखादेरन्यत् किंचिन्निवर्त्यं वा अस्ति । येन सप्रयोजनता स्यादिति ।

तदसत् । प्राप्तमणिप्राप्तिर्नफलमिति प्राप्तेःमणिनिष्ठस्वत्वादिरूपत्वे इष्टापत्तेः । तत्साक्षात्काररूपत्वे तव कण्ठे मणिरस्तीत्युपदेशस्य साफल्यं कथं स्यात्? स्वत्वादिवत्तद्विशिष्टसाक्षात्कारोऽपि प्राप्तिपदार्थः । उपदेशानन्तरं साक्षात्कृतमणीनां व्युत्पन्नानामपि तथा प्रयोगदर्शनात् । निवृत्तेत्यत्रापि निवृत्तित्वमपारमार्थिकत्वं न विद्यमानध्वंसप्रतियोगित्वम् आरोपितोरगादिध्वंसस्यारोपदशायामसत्वात् । अधिष्ठानस्यैव तद्ध्वंसत्वात् कथं स नास्तीति चेत् न । तथापि ध्वंसत्वोपहितस्य प्रागसत्वात् उपदेशोत्तरकालं च सतस्तस्य लीनरूपेण साध्यत्वादिष्यमाणत्वाच्च कथं न फलत्वम् । प्रतियोगिनि द्वेषोपहितध्वंसेच्छाहेतुः सति द्वेषोऽपि तत्साधनद्वेषः । एवं च दुःखद्वेषात् तत्साधनत्वेनावगते आरोपितानारोपितसाधारणफणिनि द्वेषात् तद्ध्वंसे इष्यमाणत्वमप्रत्यूहमिति । तत्साधननूपुरतत्त्वसाक्षात्कारहेतोरुपदेशस्य कथमसौ न फलं स्यात् ॥

ननु—फलत्वमिच्छान्तराजन्येच्छाविषयत्वम् । तच्च न फणिसाक्षात्कारादौ संभवतीति चेत् भ्रान्तोऽसि । इच्छान्तरानधीनेच्छाविषयत्वं मुख्यफलत्वम् । न तु मुख्यामुख्यसाधारणम् । तत्त्विष्यमाणत्वमात्रम् । अत एव दध्यादिगुणस्येन्द्रियादिकं फलमुच्यते । अन्यथा तस्यापि तत्फलं न स्यात् । एवं च तत्फलत्वं तत्साध्यत्वे सतीष्यमाणत्वमात्रम् । तच्च मण्याद्युपदेशं प्रति तत्साक्षात्कारादावपि सुलभम् । इष्यते हि मण्यादिसाक्षात्कारः इष्यमाणसुखसाधनत्वात् । प्रकृते तु सिद्धत्वाग्रहदशायामिच्छाया इच्छान्तराधीनेच्छाविषयत्वात् परमानन्दस्य मुख्यपुरुषार्थत्वम् । तस्य नित्यत्वाग्रहदशायां तददर्शनात्मकाविद्यायां त्विष्टतमदुःखहेतुत्वेनावगतायां द्वेषात् तन्निवृत्ताविच्छा । ततश्च तद्धेतावात्मतत्त्वसाक्षात्कारे चेच्छा संभवतीति फलत्वमात्मसाक्षात्कारं प्रत्यविद्यानिवृत्तेः संभवतीति न मुख्यं फलं परमानन्दात्मकब्रह्मसाक्षात्कारः स्वतो दुःखनिवर्तकतया च मुख्यं फलं मुख्यफलहेतुश्चेति ।

यदपि — पूर्ववादी फलभावादिना जन्यप्रमागोचरत्वरूपशास्त्रयोनित्वे हेतुंभूतः सर्वशास्त्रस्य सम्यग्वचनवृत्त्या तत्परत्वरूपसम्बन्धोऽपीति सुधायामुक्तत्वात् । सौत्रसंशब्दस्य तु प्रयोजनमुक्तम् । अनन्यशेषतत्परताया एवमन्वयरूपतया शक्तिनियमाभ्युपगमो न युक्तः । यत्परः शब्दः स शब्दार्थः इति न्यायात् । एतेन ; कथं च लक्षणावादी ब्रूयात् ब्रह्मसमन्वयम् । योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ॥" इति परास्तम् ॥

यत्तु—

स्वप्रभत्वादसन्दिग्धे वाच्यत्वाच्छ्रुतिगोचरे।
निर्विशेषे च चिन्मात्रे कथं श्रुतिसमन्वयः॥

इति, तत्प्रथमसूत्र एव प्रत्युक्तम्॥

यदपि—

आद्यसूत्रेऽहमर्थे हि प्रसिद्धिः प्रतिपादिता।
जिज्ञासार्थं द्वितीयं च जगज्जन्मादिहेतुता॥

अविद्यमानाहमर्थे लक्षणत्वेन कीर्तिता।
ईश्वरस्य तृतीये तु निर्विशेषप्रमाणता॥

शास्त्रस्योक्ता चतुर्थेन तस्मिन्नेव समन्वयः।
प्रतिज्ञातोऽन्तरित्यादिसविशेषं तु कथ्यते॥

ब्रह्मेति मायिनां पक्षस्तत्र किं केन संगतम्।
तत्त्वविद्वेषमात्रेण श्रुतिसूत्रे कदर्थिते॥

इति। तदसत्॥

नायमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वादिति भाष्ये औपाधिकरूपेणास्मत्प्रत्ययविषयतायाः तत्र देहेन्द्रियादिधर्माध्यासानुरोधेन उक्तत्वेऽप्यनौपाधिकरूपस्यैव जिज्ञास्यतायाः अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावमित्युपक्रम्य आत्मा स भोक्तुरित्यपरे इत्यन्तग्रन्थेन विप्रतिपत्तिप्रदर्शनमुखेन दर्शितत्वेन अहमर्थवृत्तिलक्षणाभिधानस्यानुचितत्वाभावात्। अत एव न तावदयमेकान्तेनाविषय इति भाष्यटीकायाम् - जीवोऽपि हि चिदात्मतया स्वयंप्रकाशतया अविषयोऽप्यौपाधिकरूपेण विषय इति भाव इति उक्तम्। आत्मा स भोक्तुरिति भाष्यटीकायां च भोक्तुर्जीवात्मनोऽविद्योपाधिकस्य ईश्वरःतत्पदार्थ आत्मेत्युक्तम्।

ननु—एवमनौपाधिकरूपस्य जिज्ञास्यत्वे औपाधिकगतलक्षणमसंगतमिति चेन्न। अविद्याविषयस्य शुद्धस्यैवेश्वरत्वेन जिज्ञास्यस्यैव लक्ष्यतानपायात् जगत्कारणतायाश्चाविद्याविषयत्वावच्छिन्नवृत्तिकतया देशतः मुक्तिदशायामसत्त्वेन कालतश्चाव्याप्यवृत्तितया स्वरूपानन्तर्भावेन तटस्थलक्षणत्वोक्तिः। औपाधिकगतत्वं च तत्रैव च प्रत्यगभिन्नब्रह्मणो जगत्कारणत्वे प्रामाण्यमुपदर्शितम्। तच्चेदानीं समर्थ्यते। अग्निमाधिकरणे चोक्तलक्षणस्यातिव्याप्त्यादिर्निरस्यते। आनन्दमयादौ च गतिसामान्यप्रपञ्चनेन समन्वय एव स्फुटीक्रियते। अन्तस्तद्धर्मादिषु केषुचिदधिकरणेषु प्रसङ्गात् प्रकृतब्रह्माश्रितोपासना निरूप्यते। अधिकमग्रे वक्ष्याम इति कासङ्गतिवार्तापि।

तदयं संग्रहः—

जिज्ञास्यता विशुद्धस्य लक्षितस्यैव कीर्तितम् ।
प्रमाणमपि तत्रैव तदेवात्रोपपाद्यते ॥

ईक्षत्यादौ प्रधानादावतिव्याप्तिर्निरस्यते ।
आनन्दमयसूत्रादावुक्तार्थःस्पष्टमुच्यते ॥

प्रसङ्गादन्तरित्यादौ स विशेषो विचार्यते ।
तदेवं सङ्गतौ सत्यां विरोधोक्तिः परस्य या ॥

ब्रह्मवादैकविद्वेषादिति सम्यग्विभाव्यताम् ।

इति । तात्पर्यलिङ्गानि च—

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इत्यभियुक्तप्रदर्शितानि ।

|| श्रीः ||

# || ईक्षतेर्नाशब्दम् ||

अथातो ब्रह्मजिज्ञासा इत्यत्र भोक्त्रात्मनो यत्पारमार्थिकं रूपं ब्रह्मेति निखिलवेदान्तेषु प्रसिद्धं तद्विचार्यमित्युक्तम्। तत्तु समन्वयादित्यत्र च शास्त्रतात्पर्यगोचरत्वरूपं शास्त्रैकसमधिगम्यत्वं-सिद्धस्य वस्तुनः प्रमाणान्तरगोचरत्वे निष्फलत्वनैयत्यान्न संभवतीत्याक्षिप्य समाहितम्। इदानीं स एव प्रागुक्तः समन्वयः परपक्षप्रतिक्षेपपूर्वकमनेनाधिकरणेन दृढीक्रियते। अत एवाध्यायसङ्गतिः। स्पष्टब्रह्मलिङ्गानां सद्विद्यादीनां प्रधानादिपरत्वं व्युदस्य ब्रह्मपरत्वव्यवस्थापनात्पादसङ्गतिश्च। अनन्तरा तु प्रागुक्तसमन्वयाक्षेपेण पूर्वपक्षप्रवृत्तेराक्षेपिकी।

अत्र च सदेव सोम्येदमग्र आसीदित्यादिवेदान्तवाक्यानि जगत्कारणत्वेन प्रधानमेव प्रतिपादयन्त्युत नेति तदर्थं चोक्तविधं जगत्कारणत्वं प्रधानादावेव संभवति अथ ब्रह्मण्येवेति संशयः। तद्बीजं च वादिविप्रतिपत्तिः। पूर्वपक्षस्तु—कारणत्वेन वेदान्तप्रतिपाद्यं प्रधानमेव तत्रैव कारणत्वोपपत्तेः। तथाहि—न तावदुपलब्धिमात्रस्य ब्रह्मणः कर्तृत्वोपयोगिज्ञानाश्रयत्वं यतो ज्ञानं यद्ब्रह्मण्यभ्युपगम्यते तन्नित्यमनित्यं वा स्यात्। नाद्यः। ब्रह्मातिरिक्तनित्यज्ञानानभ्युपगमात्। अत्यन्ताभेदे आश्रयाश्रयिभावानुपपत्तेश्च। न द्वितीयः। सत्त्वगुणपरिणामविशेषस्य तस्य निर्गुणे निर्विकारे च परमात्मन्यसंभवात् गुणाभिमानिषु च जीवेषु तु तादृशज्ञानप्रतिबिम्बाश्रयत्वात् ज्ञानवत्त्वं भवेत्। प्रतिबिम्बश्च यस्यां बुद्धिव्यक्तौ यस्य पुरुषस्य विजातीयसंयोगादिर्विलक्षणः पुरुषान्तरव्यावृत्तः संबन्धविशेषः तद्बुद्धिधर्माणामेव ज्ञानसुखदुःखानां तदीयपुरुषे प्रतिबिम्बोऽन्यथा मुक्तस्यापि संसरद्बुद्धिधर्मदुःखादिप्रतिबिम्बवत्त्वप्रसङ्गेन अनिर्मोक्षप्रसङ्गात्। स्पष्टश्चायमर्थः सांख्यप्रवचनभाष्ये।

तथाच नित्यमुक्ते परमात्मनि तादृशप्रतिबिम्बवत्ता दूरनिरस्तैव इति। यद्यपि प्रधानेऽपि न तदिति तस्यापि सर्वविषयज्ञानाश्रयत्वं दुर्घटम्। तथापि ज्ञानाकारेण परिणममानसत्त्वगुणात्मकत्वाद्युज्यते तत्र सर्वज्ञत्वव्यवहारः। परमात्मनि तु तादृशज्ञानानुकूलशक्तिमद्गुणभेदशून्यत्वात् उक्तरीत्यापि सर्वज्ञत्वं दुरुपपादम्। यदाऽप्यनिर्वचनीयं मायावृत्तिरूपज्ञानं ब्रह्मणि संभवतीति स्वगोष्ठ्यां परितुष्यसि तदापि प्रधानस्य स्वविकारभूतसत्त्वपरिणामाश्रयत्वं धर्मिज्ञानाबाध्यम्। ब्रह्मणि तु तद्बाध्यमिति सर्वज्ञशब्देन मुख्यज्ञानाश्रयपरिग्रहसंभवे औपचारिकतदाश्रयपरिग्रहोऽयुक्तः। न ह्यारोपितसर्पत्वसंसर्गवती रज्जुः स्वरसतः सर्पशब्देन व्यवह्रियते।

किंचानित्यज्ञानस्य शरीरेन्द्रियनिष्पाद्यतया अकार्यकरणे ब्रह्मणि कथं तत्संभवः। प्रधानेऽपि कथमिति चेन्न कथंचित्। औपचारिकत्वाविशेषे प्रधानपक्षपातो न युक्तः इति चेत्। सत्यम्। प्रधानस्य मुख्यकर्तृत्वासंभवेऽपि औपचारिकं तदुपपद्यते। उपादानत्वं च

मुख्यमेव सांशत्वान्मृदादिवत् परार्थत्वाच्च संघातस्य। ब्रह्म तु निरंशमभ्युपगम्यते भवता। तस्माद् प्रधानमेव कारणवाक्यप्रतिपाद्यम्। तस्य जगत्कारणता यद्यनुमानसमधिगम्या प्रमाणान्तराधिगते च नागमतात्पर्यम् तदा मास्तु तत्र वेदान्ततात्पर्यम्। तथापि प्रमाणान्तरप्राप्तप्रधानानुवादका एव वेदान्ताः तदनुवादश्च जीवे तदैक्यसंपत्तिविधानायेति न निरर्थकानुवादत्वप्रसङ्गः। एतदभिसंधायैवोक्तं कल्पतरौ—प्रयोजनं तु तत्त्वमसीति चेतने तच्छब्दप्रधानैक्यसंपत्तिः पूर्वपक्षे। सिद्धान्ते तु चेतनस्य ब्रह्मैक्यप्रमितिरिति। तस्मादुक्तब्रह्मणि न वेदान्तसमन्वय इति।

सिद्धान्तस्तु—जगत्कारणतया वेदान्तप्रतिपाद्यं नाशब्दशब्दितं प्रधानं ईक्षतेः ईक्षणात। न चेक्षणं ब्रह्मण्यनुपपन्नमिति वाच्यम्। मायापरिणामवृत्तिविशेषस्य तस्य ब्रह्मण्यपि संभवात्। ननु—इदं प्रधानेऽपि संभावितं मुख्यं चेत्युक्तमिति चेन्न। संकल्पादीनां स्वसमानविषयज्ञानपूर्वकत्वनियमदर्शनेन चेतनानधिष्ठितप्रधाने तदभ्युपगमायोगात्। मन्मते तु परमात्मनः स्वरूपभूतज्ञानेन सर्वज्ञतया संकल्पाद्युपपत्तिः। यथोक्तं पञ्चपादिकायाम्—आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त इति। अभिमतश्चायमर्थो भाष्यकृतामपि। यदाहुः—यस्य सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धमिति।

ननु—एवमप्यास्तामीश्वरो नित्यसर्वज्ञः तदधीनसंकल्पादिकं तु प्रधानस्यास्त्विति चेन्न। संकल्पादेः स्वनिर्वाहकज्ञानसामानाधिकरण्यसंभवे तद्वैयधिकरण्यकल्पनाया अयुक्तत्वात्। अत एव च श्रुतत्वाच्च इति सूत्रमपि स्वरसतः संभवति। अत्र सूत्रे संकल्पात् ईक्षणाक्षिप्तज्ञानेन प्रधानव्युदास उक्तः। तत्र कण्ठोक्तेनैव तेनेति विशेषात्। उक्तं च तत्सूत्रभाष्ये स्वशब्देनैव सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयत इति। ईक्षणं ज्ञानमेवेत्युक्तौ तु तत्सूत्रप्रयोजनं वक्ष्यते।

ननु—तत्तेज ऐक्षत इत्यादावपि ईक्षतिर्गौण इत्यवश्यं वाच्यम्। तेजः प्रभृतीनामीक्षितृत्वस्य सिद्धान्तिनाप्यनुपगमात्। तथाच तत्प्रायपाठात् तदैक्षतेत्यादावपि ईक्षतिः गौण इति युक्तमिति शङ्कां प्रत्याह—

**गौणश्चेन्नात्मशब्दात्।** ईक्षतिर्गौण इति चेन्न। अनेन जीवेनात्मनानुप्रविश्य, स आत्मा तत्त्वमसीत्यादावात्मशब्दस्य सत्त्वात्। अयं भावः—आत्मशब्दः स्वरूपपरश्चेतनपरश्च दृष्टः। तत्र जीवेनात्मनेत्यत्र स्वरूपपर एव ग्राह्यः। अन्यथा जीवशब्देनैव चेतनलाभे आत्मपदवैयर्थ्यापत्तेः। स्वरूपस्य च ससंबन्धिकत्वात्। संबन्ध्याकाङ्क्षायां समभिव्याहृता परदेवतैव संबन्धितयाऽन्वेति। तथा च यदीयं देवता जीवादत्यन्तं भिन्ना तदा जीवस्य तत्स्वरूपत्वमनुपपन्नं स्यात्। स आत्मेत्यत्र चेतनपरोऽप्यात्मशब्दः परदेवतापरामर्शकतच्छब्दसमानाधिकरणो दृश्यत इति न प्रधानस्य तेजः प्रभृतिस्रष्टृदेवतात्मकत्वमिति।

ननु—अयमात्मशब्दोऽपि प्रधाने गौण एव। आत्मनः सर्वार्थकारित्वात्। यथा राज्ञः सर्वार्थकारिणि भृत्ये भवत्यात्मशब्दो ममात्मा भद्रसेन इति, शङ्कां निराकरोति।

॥ तन्निष्ठस्य मोक्षोपदेशात् ॥

अनेन जीवेनात्मना इत्यत्र यद्यपि न तादृशार्थसंभवः प्रधानस्य जीवभोगापवर्गसाधकत्वेऽपि जीवस्य प्रधानार्थत्वाभावात्। तथापि चेतनपरत्वमभिप्रेत्येयं शङ्का। इयं च संभवदुक्तिकतामात्रेण भाष्ये उपदर्शिता। अस्यात्मशब्दस्य चेतनत्वे वैयर्थ्यस्य दर्शितत्वात्। अत एव भाष्ये एतत्सूत्रस्य स्वतन्त्रहेतुपरतायामेव निर्भरो दर्शितः। अत एव मिश्रैरप्युक्तम्। **तन्निष्ठस्य मोक्षोपदेशात्** इति शङ्कोत्तरत्वेन वा स्वातन्त्र्येण वा प्रधाननिराकरणार्थं सूत्रमिति। "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति। सदात्मनिष्ठस्य मोक्षोपदेशादिति च सूत्रार्थः। तथाच तत्त्वमसीति जीवे प्रधानैक्यसंपत्त्युपदेश इति न युक्तम्। संपत्तेर्मोक्षफलकत्वासंभवात्। नान्यः पन्था इति श्रुतेरिति सूचितम्। विस्तरेण चायमर्थो भाष्य एवोपपादितः।

ननु सदात्मप्रधाननिष्ठस्यापि मोक्षोपदेशो न युक्तः। स्थूलारुन्धतीप्रदर्शनन्यायेन देहेन्द्रियादिव्यावृत्तिप्रदर्शनाय चेतने प्रधानतादात्म्योपदेशस्यापि मोक्षसाधनीभूतात्मज्ञानोपायतया प्रधाननिष्ठाया अपि मोक्षप्रयोजकतासंभवादिति शङ्कां निराकृत्याह—

॥ हेयत्वावचनाच्च ॥

इति।

भवेदेतदेवं यदि सदात्मातिरिक्तं ज्ञेयमत्रोपदिष्टं स्यात्। न चैतदस्ति। तथाच सदात्मानमुपदिश्यैवोपक्रान्तविद्योपदेशपरिसमापनात् सदात्मनिष्ठैव मोक्षहेतुरित्यवगमेन उक्तानुपपत्तिर्दुरुक्तैवेति। अत्र चशब्देन प्रतिज्ञाविरोधः समुच्चीयते। कार्यकारणयोरभेदेन प्रधानविज्ञानान्महदादिविशेषान्तविज्ञानसंभवेऽपि चेतनस्य प्रधानकार्यत्वविरहात् तद्विज्ञानेन विज्ञातत्वमसंभवीति प्रतिज्ञाविरोधः स्वतन्त्रप्रधानवादे सुस्थः॥

॥ स्वाप्ययात् ॥

इतश्च प्रधानं नात्र प्रतिपाद्यते। यत्रैतत्पुरुषः स्वपिति नाम इत्यादिना सदात्मनि जीवस्याप्ययप्रतिपादनात्। लयो हि स्थूलरूपप्रहाणेन कारणे सूक्ष्मरूपेणावस्थानम्। न चैतत् जीवस्य प्रधाने संभवतीति॥

॥ गतिसामान्यात् ॥

सर्वेषु कारणवाक्येषु चेतनकारणत्वावगतेरेकरूपत्वात् न किमपि वेदान्तवाक्यं प्रधानकारणतापरमित्यर्थः॥

॥ श्रुतत्वाच्च ॥

एतदर्थः प्रागेव निरूपितः वक्ष्यते च।

अत्र कश्चित्—किं विशिष्टस्य परिणामित्वमेतद्वाक्ये बोध्यमिति सिद्धान्त्यते। यद्वा कर्तृत्वं बोध्यमिति। किं वा शुद्धस्य ब्रह्मणोऽधिष्ठानत्वं बोध्यत इति। नाद्यद्वितीयौ, विशिष्टस्य सदादिवाक्योक्तसत्वाद्ययोगात्। पूर्वसूत्रे अखण्डसमन्वयस्यैव प्रतिज्ञातत्वेन अत्राखण्डस्यैव वक्तव्यत्वाच्च। द्वितीये वैयधिकरण्यं च। नहि प्रधानं परिणामीति प्राप्ते ब्रह्मकर्तृ इति सिद्धान्तो युक्तः। अत एव न तृतीयः। प्रधानं परिणामीति प्राप्ते ब्रह्माधिष्ठानमित्यस्य व्यधिकरणत्वात्। कथंचिद्वैयधिकरण्येऽपि तदैक्षत सेयं देवतैक्षत नामरूपे व्याकरोत् इत्यादिकमयुक्तं स्यात्। तस्य लक्षणया चिन्मात्रपरत्वे च सर्वमपि लक्षणया प्रधानपरं स्यात्। सूत्रे ईक्षतेरिति हेतूक्तिश्च न स्यात्। न च तात्पर्यविषयेक्षणेन प्रधानस्य निरास इत्याह। अत्रेदं वक्तव्यम्—सकलस्याकार्यकारणस्य पुरुषस्य उपलब्धिमात्रस्य सर्वज्ञत्वं, किंचिज्ज्ञत्वं वा कल्प्यमिति। अपि च प्रधानस्यानेकात्मकस्य परिणामसंभवात् कारणत्वोपपत्तिः मृदादिवन्नासंहतस्यैकात्मकस्य ब्रह्मण इति च पूर्वपक्षभाष्ये कर्तृत्वोपयोगिज्ञानवत्तायाः परिणामित्वोपयोगिसांशतायाः ब्रह्मण्यसंभवप्रदर्शनेन तस्य कर्तृत्वमुपादानत्वं च द्वयमपि न संभवतीति। प्रधाने तु तदुभयमप्युपपद्यत इति व्युत्पाद्य कारणतया वेदान्तप्रतिपाद्यं प्रधानमिति पूर्वपक्षपर्यवसाने कृते प्रधानं न कारणतया वेदान्तप्रतिपाद्यमशब्दत्वादिति सिद्धान्तः श्रीमद्भाष्यटीकादौ प्रदर्शितः।

तथाच कथमत्रैतेषां भौतविकल्पानामवकाशः। न च कारणतया वेदान्तप्रतिपाद्यमुपहितं शुद्धं वा तवाभिमतमिति विकल्पो नायुक्त इति वाच्यम्। उपहितशुद्धयोस्तादात्म्येन उपहिते शुद्धधर्मसत्त्वाद्युपपत्त्या त्वदीयदूषणानवकाशात्। न चोपहितमात्रं मिथ्येति भ्रमितव्यम्। वाक्यान्वयाधिकरणकल्पतरावुपहितसत्यताया विस्पष्टमुपपादनात्।

तथाहि - एवं परमात्मनः शुद्धस्वभावात् जीवानामात्यन्तिकेऽभेदेऽपि अनिर्वचनीयानाद्यविद्योपाधिभेदात्काल्पनिको जीवानां भेद इति टीकाविवरणावसरे उपहितस्य जीवतापक्षे "यद्युपाधिविशिष्टस्य संसारो नाशितात्मनः। तल्लक्षितस्य चेत् ब्रह्ममुक्तातद्रूपमुच्यताम्॥" इति केशवेनोक्तं दूषणमनूद्य समाहितम्—यतो न विशेषणमविद्या नाप्युपलक्षणम् किं तूपाधिः कः पुनरेषां भेदः। उच्यते। कार्यान्वयित्वेन भेदकं हि विशेषणं नैल्यमिवोत्पलस्य। अनन्वयित्वेन भेदकानामुपाधितोपलक्षणता च सिद्धा। तत्र "यावत्कार्यमवस्थाय भेदहेतोरुपाधिता। कादाचित्कतया भेदधीहेतुरुपलक्षणम्॥" इति। नीलोत्पलमानयेत्यत्र हि नैल्यं व्यावृत्तियुक्तानयनकार्यान्वयित्वात् उत्पलं रक्तात् व्यावर्तयति। अलक्तककाकौ तु स्फटिकगृहकार्ययोः नान्वीयेते। अलक्तकं तु यावत्स्फटिकानयनमनुवर्तते। काकस्तु न चैत्रगृहगमनं यावदनुवर्तते। तदिहाविद्या न विशेषणमिति न तन्नाशे जीवनाशः। न चोपलक्षणमिति ब्रह्मणि न संसारः। यावत्संसारं चानुवर्तिष्यते। तन्निवृत्तौ तु जीवः स्वं ब्रह्मभावमेष्यतीति।

अत्र यद्युपहित उपाधिप्रयुक्तो ब्रह्मणोऽन्यो मिथ्यैव विशिष्टवत् तदैतस्याविद्यानाशे नाश एव स्यादिति अविद्यायां विशेषणव्यावृत्तमुपाधित्वमङ्गीकृतमप्यकिंचित्करं स्यात्। ततो

नोपहितस्य मिथ्यात्वं भेदमात्रं तु तत्र कल्पितमित्येव सिद्धान्तः। न चायं न्यायो मतान्तरेऽपि तुल्यः। एवं चोपहितस्य जगत्कारणत्वावलम्बनेन सिद्धान्ते न कोऽपि दोषः। पूर्वसूत्रेऽपि जगत्कारणत्वाद्युपलक्षिते अविद्याद्युपाधिविविक्तजैवपारमार्थिकरूपे ब्रह्मशब्दमुख्यार्थे वेदान्तसमन्वय उपपादितः। उक्ते जीवस्य पारमार्थिकरूपे किंचिदुपहितेऽपि न जगत्कारणता संभवति किं तु प्रधान एव तथाचोक्तसमन्वयो न संभवतीत्याशङ्कानिरासाय सोपाधिके तस्मिन् जगत्कारणतात्र निर्णीयते। तथा च सति जगत्कारणत्वोपलक्षिते उक्तजीवरूपे पूर्वसूत्रोक्तसमन्वयः सिद्धो भवति।

इत्थमेव चोपहिते जगत्कारणतानिर्णायकन्यायान्तराणामपि प्रकृतोपयोग इति न किंचिदनुपपन्नम्।

एतेनेक्षणादिरूपहेत्वसिद्धिशङ्कापि निरस्ता। शुद्धाभिन्ने कल्पितभेदवत्युपहिते तत्संभवात्।

नन्वेवं भाषान्तरेण शुद्धे ब्रह्मण्येव उपाध्यवच्छेदेन जगत्कारणता स्वीकृता परं सा न व्याप्यवृत्तिरित्येतावदेव पर्यवसितमिति चेत्। किं चातः? शुद्धं ब्रह्म न जगत्कारणमिति भावत्कप्रवादविरोध इति चेन्न। ब्रह्मणि जगत्कारणता नानवच्छिन्नवृत्तिकेति तदर्थात्। न च तात्पर्याविषयत्वमीक्षणस्य। अत्रावान्तरतात्पर्योपगमात्। न चात्र सदेवेत्यादि वाक्यसमन्वयोक्तिश्चेत् आनन्दमयोऽभ्यासात् इतिवत् सदीक्षितेरिति सूत्रं स्यात्; प्रधानस्य शाब्दत्वनिराससूत्रं चेदिदमधिकरणं तन्निरासके चतुर्थपादे स्यादिति वाच्यम्। प्रधानं न जगत्कारणतया वेदान्तप्रतिपाद्यं अशब्दत्वात् वैदिकशब्दाप्रतिपाद्यत्वादित्यभिहिते, तदापि असिद्धं, सद्विद्यायामेव जगत्कारणतया प्रतिपाद्यमानं प्रधानमित्यवगमादिति शङ्कानिरासाय सद्विद्यायां जगत्कारणतया प्रतिपाद्यं न प्रधानम् ईक्षतेरित्येतादृशार्थस्य विवक्षितस्य त्वदुक्तविन्यासेनालाभात्।

ननु न प्रधानं जगत्कारणतया वेदान्तप्रतिपाद्यमशब्दत्वादित्यस्य अविवक्षायामपि न क्षतिः। सदेवेत्यादिवाक्यप्रतिपाद्यं न प्रधानमिति प्रत्येकं समर्थनेनापि समन्वयसिद्धेरिति चेन्न। यतो लक्षणस्य त्रयो दोषाः अव्याप्तिरसंभवोऽतिव्याप्तिश्च। न च तन्निरासं विना लक्षणपरिशुद्धिरिति अतिव्याप्तिनिरासाय क्वापि वेदान्ते प्रधानस्य न जगत्कारणतया प्रतिपाद्यत्वमित्येषोऽर्थो वर्णनीयः। स च सदीक्षितेरिति विन्यासमात्रेण न निर्वहतीत्युक्तविन्यासादरः। तत्र च सद्विद्यादीनां जगत्कारणतया प्रधानप्रतिपादकत्वसंभवादुक्तसाध्यस्य बाध इति शङ्का सद्विद्यायां जगत्कारणतया प्रतिपाद्यं न प्रधानमीक्षतेरित्यादिना निरस्यते। सद्विद्यादिना तदप्रतिपादनेऽपि शाखान्तरे तथाप्रतिपादनं स्यादिति शङ्का तु गतिसामान्यादिति सूत्रेण।

नन्वेवं सद्विद्यादिना न प्रधानं जगत्कारणतया प्रतिपाद्यमिति शङ्कानिरासेनैवातिव्याप्तिनिरासःसंभवतीति शाखान्तरे तत्प्रतिपादनस्यापि गतिसामान्यादित्यनेन निरासादिति प्रधानं

न तथा प्रतिपाद्यम् अशब्दत्वादिति सामान्यप्रतिज्ञादिकं नानुसरणीयमिति चेत् न। अत्रैवातिव्याप्ति-शङ्का निरसीनीयेति द्योतनाय तदावश्यकत्वात्। अन्यथा असंभवशङ्कैवात्र निरस्यत इति भ्रमापत्तेः। यथा चात्रातिव्याप्तिनिरासेऽपि स्वारस्यं तथोपरिष्टाद्वक्ष्यामः। अतिव्याप्तिनिरासक-युक्तेरेव फलतोऽसंभवनिरासान्न तत्र पृथग्यत्नान्तरेण भाव्यमिति यत्किंचिदेतत्।

यद्यपीक्षतेरित्यनेन बाधनिरासवदसिद्धिनिरासोऽपि भवति। तथापि समन्वयविरोधिनो बाधस्य इदानीमवश्यनिरसनीयतया तन्निरसनहेतुतया साक्षात्पादत्रयीसङ्गततया च सद्विद्याविचा-रोऽत्रैव युक्तः। प्रधानस्य क्वचिद्वैदिकशब्दप्रतिपाद्यत्वेऽपि समन्वयविरोधात्साक्षादत्रैव संगत्यभावाच्च आनुमानिकाद्यधिकरणत्रयस्य तुरीये निवेशः।

यत्त्वयोगव्यवच्छेद एव आद्यपादे प्राधान्येन प्रतिपाद्यते नान्ययोगव्यवच्छेदः। तथाहि - सद्विद्याप्रधानभूतायां सद्विद्यायां सदेवेदमित्यनेन अनेन जीवेनात्मनेत्यनेन च सामानाधि-करण्यात् प्रधानजीवयोः कारणत्वशङ्कायां तद्विरोधादन्यत्रापि ब्रह्मणः कारणत्वबोधना-संभवात् कारणत्वस्य ब्रह्मण्यसंभवशङ्कायां चेतनासाधारणधर्मप्रतिपादनेन जीवासंभावितधर्म-प्रदर्शनेन च तद्विलक्षणस्य ब्रह्मण एव कारणत्वमित्यभिधानस्यासंभवव्यावृत्तिप्रधानकत्वात्। यद्यपि चिदचितोरप्यर्थात् कारणत्वं व्यवच्छिद्यते। तथापि नासावतिव्याप्तिव्यावृत्तिरूपान्ययोगव्य-वच्छेदः लक्ष्यतावच्छेदकव्यापकतया गृहीतस्य लक्षणस्य लक्ष्यतावच्छेदकाभाववद्वृत्तित्वं ह्यतिव्याप्तिः। इह च लक्ष्यतावच्छेदकासामानाधिकरण्ये शङ्किते तद्व्यावृत्तिरेव क्रियते। तच्च चिदचिद्विषयत्वं कारणवाक्यानां निरस्यैव निरूप्यमित्यर्थात् व्यवह्रियमाणोऽपि न व्यपदेशनिमित्ततां भजते। असाधारण्येन हि व्यपदेशा भवन्ति। त्रिपाद्यामङ्गीकृत्य ब्रह्मणः कारणत्वं जीवासाधारणधर्मदर्श-नात् केषांचिद्वेदान्तवाक्याना जीवपरत्वे शङ्किते तद्व्यवच्छेदमात्रकरणात् अतिव्याप्तिरूपान्ययोग-व्यवच्छेद एवोच्यत इति विशेष इति।

तन्न। सदीक्षितेरिति न्यासेऽप्यसंभवनिरासंसभवेन यथोक्तविन्यासवैफल्यात्, गति-सामान्याभिधानवैफल्याच्च। न च तत्रैवेदं हेत्वन्तरमुच्यते, एको ह वै नारायण आसीदिति वाक्यान्तरेषु ब्रह्मासाधारणश्रुतितदसाधारणलिङ्गबाहुल्येन चेतनकारणताध्रौव्ये भूयोऽनुग्रहन्यायेन सर्वशाखाप्रत्ययन्यायेन च कारणवाक्यानां समानार्थतारूपगतिसामान्यस्य न्याय्यत्वादिति सद्विद्यापि चेतनकारणपरैवेति युक्तमितीति वाच्यम् तर्ह्यसंदिग्धतद्वाक्यार्थपरिशीलनेनैवासंभवनिरासात् व्यर्थः सद्विद्याया ब्रह्मपरत्वनिर्बन्ध इत्यापातात्। कारणवाक्यश्रुतनारायणशब्दमुपजीव्य हि भवतां शिवादिजगत्कारणनिरासे निर्भरः।

किंच 'छागो वा मन्त्रवर्णात्' इति न्यायेन सद्विद्याया नारायण एव पर्यवसाने युक्तम्। अथोभयत्रापि विरुद्धलिङ्गात् न निर्णय इत्युच्यते। तथा सति गतिसामान्यादिति हेतुर-निर्णायक एव स्यात्। सद्विद्यातोऽन्येन निर्णये च तेनैवासंभवनिवारणमपि भवतीत्युक्तम्। आत्मावा इदमित्यादिवाक्येष्वस्य तथा निर्देश इत्येव तत्र प्रधानादिव्यावर्तकात्मपुरुषादिशब्दसद्भावात्। न

च तत्रापीदमिति सामानाधिकरण्यनिर्देशात् नसन्दिग्धार्थतेति वाच्यम्। तथा सत्यन्यत्रापि तादृशसामानाधिकरण्यनिर्देशस्य गत्यनुक्त्या निर्णयासंभवतादवस्थ्यात्। शरीरशरीरिभावेन तन्निर्वाहश्चान्यत्रापि तुल्यः। तद्बोधकं च स्वतन्त्रमन्तर्यामिब्राह्मणं जागरूकमित्यन्ययोगव्यवच्छेदपरतासूचनायैवमुक्तम्। लक्ष्यतावच्छेदकव्यापकस्येत्यादि तु न युक्तम्। अतिव्याप्तिशरीरे तन्निवेशवैफल्यात् दूषकताबीजभेदादेव क्वाचित्कस्यातिव्याप्तौ अव्याप्त्यसंभवसांकर्यस्यादोषत्वात्। अशब्दमित्यनेनासाधारण्येन व्यपदेशा भवन्तीति न्यायानुगृहीतेन शब्दैकानधिगम्यत्वलाभात्। तेन च सांख्यपरिकल्पितानुमानगम्यत्वसिद्धया त्रिगुणात्मककार्योपादानतानिर्वाहकं त्रिगुणात्मकमचेतनं कारणं सदितिपदेन इदमिति कार्यवाचकपदसमानाधिकरणेन बोधयितुं युक्तमिति पूर्वपक्षहेतुसूचनाय ईदृशविन्यासादर इत्यपि वदन्ति।

यत्तु—आनन्दमयोऽभ्यासात् इत्यादौ साध्यनिर्देशलाभायावश्यानुषञ्जनीयस्य तत्पदस्येह तदशब्दं नेत्युद्देश्यसमर्पकतयान्वयो हेतुसाध्ययोः सामानाधिकरण्यं चेति। मन्मते सूत्रयोजनायां स्वारस्यं तव त्वशब्दं प्रधानं कारणं न, कारणस्येक्षितृत्वादिति वदतो हेतुविभक्त्यभावेन साध्यत्वयोग्यश्रुताशब्दरूपसाध्यस्य त्यागेन साध्यकल्पनार्थमध्याहृतस्य कारणपदस्य विभक्तिविपरिणामेन आवृत्तिः वैयधिकरण्यं च। कारणशब्दं प्रधानं नेति योजनायां च अशब्दं हि तदिति हेतूकृतस्य अशब्दत्वस्य कारणत्वांसिद्धिरिति।

तन्न, मन्मतेऽपि तत्तु समन्वयादित्यत्र साध्यसमर्पकतयानुषक्तस्य शास्त्रयोनिपदस्यैवात्रानुषङ्गेणाशब्दं न शास्त्रयोनि अशब्दत्वात्, इति योजनायां अस्वारस्याभावात्। अत्रानुमाने बाधकशङ्कानिरासायाश्रयणीये शास्त्रयोनि अशब्दमीक्षतेरिति योजनान्तरेऽप्येवम्, अत एव न वैयधिकरण्यमपि शङ्कास्पदम्। परंतु पूर्वपक्षानुरोधेन द्वितीययोजनायां सामान्यवाचिशास्त्रपदं शास्त्रविशेषपरमादर्तव्यमिति विशेषः।

श्रीमद्भाष्यमप्यत्रार्थे स्वरसम्। तथाहि-सांख्यपरिकल्पितं सांख्योन्नीतानुमानगम्यमित्यशब्दपदलब्धार्थकथनम्। जगत्कारणं शक्यं वेदान्तेष्वाश्रयितुमिति शास्त्रयोनिपदार्थकथनम्। अशब्दं हि तदिति आवृत्त्या वैदिकशब्दाप्रतिपाद्यत्वरूपहेतुकथनं, कथमशब्दत्वमिति च हेतुसाध्ययोः द्वयोरप्याक्षेपः सद्विद्यायां प्रधानस्य कारणत्वेन प्रतिपाद्यमानत्वादेवेति हेतुराभिप्रायिकः। तत्रोत्तरम्—ईक्षितृत्वश्रवणात्कारणस्येति। अत्रापि कारणस्येत्यस्य सद्विद्यया कारणत्वेन प्रतिपाद्यस्येत्यर्थः। एवं च शास्त्रयोनिपदमेवात्रोद्देश्यसमर्पकं भवति इति न शब्दान्तराध्याहारगौरवं सप्रयोजनत्वाच्च न योजनान्तरानुसरणं दोषाय। सूत्राणां हि विश्वतोमुखत्वं गुण इति लक्षणविदः। पठति च—सारवद्विश्वतो मुखमिति।

ननु—हेतूकृतमशब्दत्वं अवाच्यत्वं वा, शब्दवृत्तिमात्राविषयत्वं वा, वेदासिद्धत्वं वा, कारणत्वेन वेदासिद्धत्वं वा। चतुष्टयमपि ब्रह्मण एव; त्वन्मते शास्त्रप्रतिपाद्यस्य शुद्धस्यावाच्यत्वात्।

अवाच्यत्वे च वृत्त्यन्तरायोगात् । ननु प्रधानस्य(तु) सांख्यमते तस्य वाच्यत्वात् । कारणत्वेनैव अजाम् इति श्रुतिसिद्धत्वाच्च । त्वयापि त्रिगुणस्योपादानतया मायां तु प्रकृतिं विद्यात् इति श्रुतिसिद्धत्वाङ्गीकाराच्च, त्रिगुणस्य पारमार्थिकत्वादावेव तव परं विवादः । सांख्यानुमानगम्यत्व-पर्यवसितमशब्दत्वं च न वेदान्तवेद्यत्वाभावसाधकम् । तथा सति तार्किकोत्प्रेक्षितानुमानगम्यत्वात् ईशस्यापि तथात्वापातात् । त्वया हि प्रधानस्याशब्दत्वसाधनायैव एतदध्यायस्य तुरीयपादे आद्यमधिकरणत्रयमित्युद्घोष्यते तेनावगम्यते प्रधानस्य सर्वथा वेदाप्रतिपाद्यत्वं तवानुमतमिति । एतेन स्वप्रधानतया वेदाप्रतिपाद्यत्वमशब्दत्वमिति निरस्तम् । एतदभिप्रेत्यैव माध्वपरकीयभाष्ये न चाशब्दत्वमितरसिद्धमित्युक्तम् । अनुव्याख्याने च न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसाविति । किंचात्मन ईक्षारूपस्य न स्वरूपेणेक्षितृत्वम् अव्यक्तादिजडविशिष्टस्य तत्संभवे अव्यक्तस्याप्यात्म-विवेकेन आत्मविशिष्टस्य तत्स्यात् । तन्निष्ठस्येत्याद्युत्तरसूत्रविरोधश्चेति चेन्न ।

ईश्वरपरतन्त्रस्याव्याकृतस्य तत्त्वज्ञाननाश्यस्य वैदिकशब्दवाच्यत्वेऽपि स्वातन्त्र्यतत्त्व-ज्ञानानिवर्त्यत्वादिधर्मविशिष्टस्य तदुपलक्षितस्य त्रिगुणात्मकतत्त्वस्य वैदिकशब्दवाच्यत्वासिद्ध्या उक्तदूषणानवकाशात् । परेण तादृशवाच्यत्वं प्रधाने नाङ्गीक्रियत इति परं प्रत्यपि असिद्धो हेतुरिति चेत् । अत एवाङ्गीकारयिष्यते; प्रसाध्याङ्गकेनापि हि हेतुना न्यायप्रयोगो बहुधा दृश्यते । ईक्षारूपस्याप्यात्मन ईक्षितृत्वमुक्तम् प्राक् अविद्याविषयत्वोपहितस्यापि सत्यतायाः शुद्धब्रह्मैक्यस्य च प्रागुक्तत्वात् तन्निष्ठस्य न मोक्षोपदेशानुपपत्तिः । वाच्यवृत्त्या वैदिकशब्दप्रतिपाद्यतापर्याप्त्यनधि-करणत्वरूपावाच्यताशालिनोऽपि लक्षणया वैदिकशब्दप्रतिपाद्यत्वम् । उपहितरूपेण वाच्यवृत्त्या तत्प्रतिपाद्यत्वं च संभवत्येवेति न तत्रोक्तमशब्दत्वम् अवाच्यस्य लक्ष्यत्वमसंभवीत्यत्र यद्यवाच्यत्वं वाच्यवृत्तिविषयान्योन्याभाववत्वं तदा ब्रह्मण्यसिद्धिः तादृशोपहितान्योन्याभावशून्यत्वात् । यथा-कथंचिद्वाच्यत्वोपहितभेदश्च उपहितशुद्धयोः जीवाभेदमतेऽनैकान्तिकः । लक्ष्यतयाभिमते घटत्वोपहिते वाच्यत्वोपहितभेदस्य त्वन्मतेऽभ्युपगमात् अप्रयोजकश्च, विपक्षे बाधकाभावात् ब्रह्मण्यवाच्यता-सिद्धान्तश्च तन्मात्रविषयकज्ञाने वाच्यवृत्तेः साक्षादपेक्षाराहित्यमात्रेण वक्ष्यमाणरीत्या वेति दिक् ।

एतेन गौणश्चेन्नात्मशब्दादित्यत्र आत्मशब्दवाच्यत्वहेतुश्चेदसिद्धिः । तल्लक्ष्यत्वतत्प्रति-पाद्यत्वादिकं च प्रधानस्यापि । किं च किमसावात्मशब्दश्चेतनपरः ? किं वा स्वरूपपरः ? नाद्यः । चेतनत्वस्य ज्ञातृतारूपत्वे शुद्धे ब्रह्मणि तदभावात् । विशिष्टे तत्संभवे तु प्रधानस्यापि तत्संभवात् ज्ञानस्वरूपपरत्वे त्वात्मशब्दस्य ईक्षितृत्वं गौणमित्यत्रैव हेतुत्वेन गौणत्वाभावे हेतुत्वायोगात् । नान्त्यः । सार्वज्ञासार्वज्ञादिविरुद्धांशत्यागेन चिद्रूपेण जीवस्यैक्यवादे जडत्वादिविरुद्धांशत्यागेन सद्रूपेण प्रधानेनैक्यस्यापि संभवात् । तन्निष्ठस्येति सूत्रेऽपि तच्छब्दार्थः शुद्धो विशिष्टोवा ? नाद्यः । तस्येक्षितृत्वायोगात् । न द्वितीयः । विशिष्टनिष्ठस्य साक्षान्मोक्षायोगात् । पारंपर्ये तस्य प्रधान-निष्ठस्य बाधादित्यादिकं निरस्तम् ॥

उपहितब्रह्मणि ईशितृत्वाद्युपपत्तेरुक्तत्वात् तन्निष्ठेत्यत्राप्युपहितस्यैव तच्छब्देन परामर्शः । तन्निष्ठा च तदीयकेवलरूपसाक्षात्कारवत्त्वमिति न कोऽपिदोषः । न हि स्वतन्त्रप्रधानीय-शुद्धरूपसाक्षात्कारस्य साक्षान्मोक्षान्वयित्वं 'नान्यः पन्था' इत्यादिश्रुतिविरोधात् । प्रधानत्व-विशिष्टेन तदुपलक्षितेन वा न जीवैक्यं संभवति । जडस्वभावस्य प्रधानस्य जाड्यहानायोगात् । तद्धाने वा चेतनस्वभावतैव स्यात् । चैतन्यहाने चात्मस्वरूपस्य मोक्षस्यापुरुषार्थत्वापत्तिः । परमार्थतः प्रधानस्य ज्ञानानन्दादिरूपत्वे भाषान्तरेण परं ब्रह्मैव सद्विद्यादिनिखिलवेदान्तवेद्यमित्यायातमिति दिक् ॥

यत्तु—पूर्वपक्षे गौणप्रायपाठादाद्यमीक्षणं गौणमिति शङ्का नोपपन्ना । तेजोऽबन्ना-नामपि देवतात्वेन चेतनत्वादिति । तदसत् । पूर्वतन्त्रे शब्दस्यापि देवतात्वाभ्युपगमेन देवताशब्दस्य न चेतनैकवाचित्वमिति तदभिप्रायात् ॥

यदप्यात्मानात्मविवेकस्य मोक्षहेतुत्वात् अनात्मज्ञानमपि मोक्षहेतुरिति **जयतीर्थेनोक्तम्**। तदसत् । तमेवेति श्रुत्या तदन्याविषयकसाक्षात्कारस्यैव मोक्षसाधनत्वोक्तेः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथेत्यादिकाः श्रुतयोऽप्यत्र द्रष्टव्याः ।

एतेन हेयत्वावचनादित्यसंगतं सांख्येनाद्वैतज्ञानार्थं प्रधानोपदेशानभ्युपगमात् । हेयत्वावचनमन्नमयादावनैकान्तिकं च । उत्तरोत्तरब्रह्मत्ववचनं ज्ञापकमिति चेत् अत्रापि तथाविध-ज्ञापकसौलभ्यात् । प्रतिज्ञाविरोधस्तु ब्रह्मवाद एव प्रधानस्य महदादिविशेषान्तसर्वकार्यात्मकत्वात् । भोक्तृवर्गो न प्रधानात्मक इति चेन्न । ब्रह्मणो जडात्मकत्वसंसार्यात्मत्वयोः द्वयोरप्यभावात् । स्वाप्ययोऽपि ब्रह्मण्यसिद्धः । स्वापकाले जीवानां ब्रह्मैक्याभावात् परिष्वङ्गस्य प्रधानव्यावर्तकत्वाच्च । ब्रह्मविषयं गतिसामान्यं परस्यासिद्धमेव । ईक्षणादिना तज्ज्ञापने प्रथमसूत्रेणैव गतार्थता । अत एव च श्रुतत्वादित्यसिद्धं गतार्थं च गतिसामान्येनेति तदुक्तमपि निरस्तप्रायम् ।

शुद्धात्मप्रतिपत्तये स्थूलारुन्धतीन्यायेन प्रधानोपदेश इति परो यदा शङ्केत तदा हेयत्वावचनं तन्निरासायोपन्यस्यत इत्युक्तौ संदर्भविरोधाभावात् अन्यथा द्वैतिभिर्गौणस्यात्मनो मोक्ष-हेतुज्ञानविषयत्वानभ्युपगमात् गौणश्चेदिति शङ्कायाः तन्निरासस्य च तवाप्यसंगतेः । जगद्वाचि-त्वात् वाक्यान्वयादित्यधिकरणयोः यत्नेन जीवस्य मोक्षहेतुज्ञानविषयतायास्तैर्निराकृतत्वात् । न चैवं तात्त्विकंरूपं तु ब्रह्मैवेत्यत्रापि तथाविधज्ञापकसौलभ्यादिति तु तादृशज्ञापकमप्रदर्श्य न शोभते ।

यत्त्वत्रापि चरमदृष्टान्तेऽभिहिते तद्धास्य विजज्ञाविति ब्रह्मज्ञानवचनमेव पूर्वोक्तस्य ब्रह्मत्व-ज्ञापकं सुलभमिति जयतीर्थाभिप्रायवर्णनं, तदयुक्तम् । चरमदृष्टान्तेऽपि स आत्मा तत्त्वमसीति पूर्वोक्तस्यैवाभिधानेन तद्धानासूचनात् । प्रतिज्ञाविरोधस्तु न ब्रह्मवादे ब्रह्मण एव निखिलजगत्तात्त्विक-रूपतया तस्मिन् विज्ञाते जगतस्तत्त्वतो विज्ञातत्वस्य निरन्तरायत्वात् । यथाचैतत्तथा प्रकृत्यधि-करणे आरम्भणाधिकरणे च निरूपयिष्यते । स्वाप्ययोऽपि नानुपपन्नः । स्थूलावस्थाप्रहाणेन सूक्ष्म-

रूपतयावस्थानं हि द्रव्यस्य लय इत्युच्यते । भवति च जीवस्यापि जाग्रद्दशायां स्थूलरूपेण परिणतमनोरूपोपाधिवशात् विश्वात्मना स्थितस्य स्वापदशायां तत्प्रहाणेन स्वरूपे ब्रह्मणि प्राज्ञरूपेणावस्थानम् ।

गतिसामान्यादित्यस्य वैयर्थ्यं तु न शक्यशङ्कम्, प्रसिद्धशाखास्थकारणवाक्यानां आत्मादिश्रुतीक्षणादिलिङ्गैः वियदध्याये वक्ष्यमाणन्यायैश्च प्रधानादिपरत्वस्य वक्तुमशक्यत्वेऽपि अप्रसिद्धशाखासु केषाञ्चिद्वाक्यानामुक्तश्रुतिलिङ्गशून्यानामचेतनप्रधानादिश्रुतिलिङ्गवतां च संभावितत्वेन ततः प्रधानस्यापि कारणतासिद्धिः कुतो न स्यादिति शङ्कायां नेदमुपपद्यते । क्वचिदद्वैतब्रह्मणो जगत्कारणतां क्वचिच्च स्वतन्त्रप्रधानकारणतां चाभिदधतः शास्त्रस्य विप्रतिषेधेनाप्रामाण्यापातात् । न चाप्रसिद्धसंभावनामात्रेण प्रसिद्धस्यान्यथानयनं युक्तमिति प्रयोजनस्यातिस्फुटत्वात् । श्रीमद्भाष्यमप्येतमेवार्थमनुगृह्णाति । भगवता भाष्यकारेण यदि तार्किकसमय इव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यदित्यादिना प्रसिद्धशाखासु न क्वापि स्वतन्त्रप्रधानकारणतोक्तिरित्युपपाद्य महच्च प्रामाण्यकारणमेतत्, वेदान्तवाक्यानामित्यादिना प्रसिद्धासु स्वतन्त्रप्रधानकारणतोक्तिसंभावना निरस्ता । गतिसामान्यस्य प्रामाण्यव्यापकत्वात् विप्रतिषेधे अप्रामाण्यापत्तेरिति सूचनाय हि गतिसामान्यस्य प्रामाण्यव्यापकतारूपं प्रामाण्यकारणत्वमुक्तमिति ।

नापि श्रुतत्वाच्चेत्यस्य वैयर्थ्यं संभाव्येतापि, असाधारणश्रुत्याद्यभावात् । सद्विद्यायाः प्रधानादिपरत्वं श्वेताश्वतरनारायणाद्युपनिषत्सु ईशाननारायणादिशब्दानामुपहिते ब्रह्मणि योगरूढानामात्मादिश्रुतिवदनाशङ्क्यान्यपरत्वकानां तथाविधानां कालकालत्वादिलिङ्गानां च सत्त्वेन सर्वथा तस्य शङ्कितुमशक्यत्वादिति कैमुतिकन्यायेन अचेतनकारणतानिरासार्थत्वात् । तस्य 'तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति'। 'क्षरं प्रधानममृताक्षरं हरः क्षराक्षरावीशते देव एकः' इति मन्त्रोपात्तस्यैव परब्रह्मणः नारायणमिति मन्त्रे प्रतिपादनात् । एको ह वै नारायण आसीदिति । अत्र हि नारायणशब्दः संज्ञायां निष्पन्नः श्रूयते । किंच जगत्परिणामिप्रकृत्याख्यमूलकारणस्य श्रुत्यन्तरे चेतनेशितव्यत्वश्रवणादपि न स्वतन्त्रप्रधानस्य जगत्कारणत्वं इत्यस्य विवक्षितम् । अत एव भाष्ये स्वशब्देनैव सर्वज्ञ ईश्वरो जगत्कारणमित्यत्र ईश्वरशब्दः संकोचकाभावेन निखिलचिदचिदीश्वरत्वबोधक उपात्तः । एवं प्रधानकारणतानिरासवत् जन्मादिसूत्रे सामान्यतो निरस्तम् जीवस्य जगत्कारणत्वमपि प्रधानकारणतानिरासप्रसङ्गेन लक्षणदोषतासामान्यान्निरसनीयमित्येतदर्थमप्येतत्सूत्रम् । अत एव भगवता भाष्यकारेण 'सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति मन्त्रांशः 'तमीशानां' 'ज्ञः कालकालः' 'क्षराक्षरावीशत' इत्यादिकं सर्वज्ञेश्वरं प्रकृत्येत्यनेनाभिधाय उदाहृतमिति यत्किंचिदेतत् ।

**यदपि** संकल्पादीनां मनोवृत्तित्वस्य श्रुतिसिद्धतया मायापरिणामस्य संकल्पादिरूपता न संभवति ब्रह्मण्यपीक्षणं न संभवति । तादृशवृत्तिप्रतिबिम्बितं चैतन्यमीक्षणमित्यपि न युक्तम् । अनागतादिविषयस्य चैतन्येन संबन्धासंभवात् । प्रायपाठानुरोधेन गौणमीक्षणमिति शङ्कापि

न युक्ता । प्रायपाठरूपसंनिधितः ईक्षणश्रुतेःबलत्त्वात् । स्थूलारुन्धतीन्यायगमकशैलीविरहेण तच्छ-ङ्कया चतुर्थसूत्रावतरणमप्ययुक्तम् । पञ्चमसूत्रं तु जयतीर्थोक्तिदूषणकबलितम् । स्वाप्ययादिति हेतुरप्यसंगतः । उपहितेश्वरस्यैव कारणत्वेन तस्य जीवाद्भिन्नतया स्वशब्देन तन्निर्देशायोगात् । तत्र जीवस्य लयासंभवादिति तान्त्रिकप्रलपितम् ।

तदपि मन्दम् । सर्वं मन एवेत्यादिश्रुतेः जीवधर्मविषयत्वेन ईश्वरधर्माणां मायावृत्ति-रूपत्वे बाधकाभावात् । ईश्वरस्यापि दिव्यं मनोऽस्तीति अवगमाच्च । अनागतादिनापि विषयेण त्वदभिमतनित्यासंकुचितभागवतज्ञानस्येवास्मदभिमतवृत्तितत्प्रतिबिम्बितचितोरपि संबन्धसंभवाच्च । विस्तृतं चैतदन्यत्र । प्रायपाठानुरोधेन गौणमीक्षणमिति शङ्कापि युक्ता । तथाहि ईक्षणं यदि संकल्पो यदि वाऽऽलोचनात्मकं ज्ञानम् उभयथापि तदाश्रयत्वमौपाधिकं धर्मिज्ञानबाध्यमेव ब्रह्मण्यङ्गीकार्यमिति तदभिधायिनः प्रत्ययस्योपचरितार्थत्वम् । सांख्यमते तु ईक्षणं कार्योत्पादनाभिमुख्यरूपं गौणम् । एवं सति किं प्रकृतेरौपचारिकत्वं किं वा प्रत्ययस्येति विशये गौणेक्षणप्रायपाठो विनिगमक आश्रित इति न स्थानमात्रेण श्रुतिभङ्गः । परब्रह्मणः शरीरेन्द्रियादिलक्षणसंकल्पाद्युपकरणशून्यत्वादपि नेक्षितृत्वं संभवतीति ईक्षितिःगौण एवेति तु शङ्कितुरभिप्रायात् । श्रुतत्वाच्चेति सूत्रेण चैतच्छङ्का निरस्यते ।

अभ्युपेत्यवादेन चात्रात्मशब्दरूपहेत्वन्तरानुसरणम् । स्थूलारुन्धतीत्याद्यपि न युक्तम् । स आत्मेति सत आत्मत्वमुपदिश्य पश्चादतत्त्वमसि इत्यात्मनोऽनात्मव्यावृत्तिप्रतिपादनात् हेयत्वावचन-मसिद्धमिति गूढाभिसंधिना स्थूलारुन्धतीन्यायमनुसृत्य शङ्कासंभवात् । अकारप्रश्लेषकल्पना विरुद्धा प्रतिज्ञाविरोधादित्यभिप्रायेण तत्समुच्चयाय चकार उपात्तः सूत्रे । तथा च पूर्वं सद्विज्ञानेन सर्वविज्ञानं सोपपत्तिकं प्रतिज्ञाय यथा सोम्येत्यादिना अनेन जीवेनात्मनेत्यादिना च तत्रोपपत्तिं संक्षेपविस्तराभ्यामभिधाय उपसंहारे तादृशप्रतिज्ञाभङ्गनिदानस्य सता जीवभेदस्योपदेशो न युक्त इति समाधानाभिप्रायः । अत एव भाष्ये न चैवमवोचत् । सन्मात्रावगतिनिष्ठैव हि षष्ठप्रपाठकपरि-समाप्तिर्दृश्यत इत्युक्त्वा चशब्दः प्रतिज्ञाविरोधसमुच्चयार्थः । सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येतेत्युक्तम् । अन्यथा प्रतिज्ञाविरोधसमुच्चयमुक्त्वा कारणविज्ञानात् सर्वं विज्ञातमित्याद्ये-वावक्ष्यत् न तु सत्यपि हेयत्ववचन इति । जयतीर्थोक्तिस्तु प्रागेव प्रत्युक्ता ।

स्वाप्ययादिति हेतुरपि युक्तः । स्वपितिनामनिर्वचनेन शुद्धे ब्रह्मणि लयोक्तावपि सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्युपक्रम्य तस्यैव सोपाधिकरूपेणेक्षणाद्यभिधानेन तयोर्वास्तवा-भेदप्रत्ययात् । सतः कारणस्य निरुपाधिकरूपताप्रत्ययेन तदीयनिरुपाधिकरूपे पूर्वोक्तजीवस्य लयाभि-धाने सत्युपक्रान्तस्य कारणस्य केवलरूपस्य चेतनेतरप्रधानरूपताव्यावृत्तिसिद्धिः । तत्सिद्धौ च तदीयोपहितरूपे तादृशव्यावृत्तिः सुलभैव । उपहितमौपाधिकभेदवदपि न मिथ्या शुद्धाभिन्नं चेति प्रागेव निरूपितम् । उपहितयोर्भेदस्तु एकोपाध्यवच्छेदेनापरोपाधिसत्तामपेक्षते । आकाशो घटा-

काश इतिवत् मठाकाशो मठान्तराकाश इति प्रत्ययाभावेन विरुद्धोपाधिद्वयप्रत्येकोपहितयोर्न परस्पराभेद इत्यादिकमन्यत्रोपपादितमित्येषा दिक् ॥

सांख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेवेति मन्यमाना इत्यादिभाष्ये सांख्यादीनां तादृशाभिमानवत्त्वकथनफलकतया दीक्षितश्रीचरणैरित्थमत्र पूर्वपक्षो दर्शितः । सृष्टिवाक्यजातं सांख्यानुमानसिद्धं प्रधानमनुवदतीति युक्तम् । वृद्धव्यवहारेण सिद्धार्थे व्युत्पत्तौ पूर्वाधिकरणस्थितायामपि मानान्तरगोचर एवार्थे तत्संभवात् तदगोचरे ब्रह्मणि ब्रह्मादिशब्दानां वृत्त्यग्रहात् । तेजसा सोम्य शुङ्गेन आपो मूलमन्विच्छेति श्रुत्यैव शुङ्गशब्दोक्तकार्यलिङ्गकानुमानसिद्धकारणानुवादस्फुटीकरणाच्चेति ॥

तत्रायमभिप्रायः—व्यवहारादिना हि प्रथमं शक्तिर्गृह्यते । पश्चाद्वृत्त्यन्तरमिति हि सर्वानुमतमानुभविकं च, तथा चावाच्यत्वेन त्वदुपगते ब्रह्मणि कथं संकेतग्रहः । योगेनापि हि ब्रह्मशब्दो व्युत्पाद्यमानो नार्थान्तरासंस्पृष्टवस्तुप्रतिपत्तये भवति । ब्रह्म चासंस्पृष्टं न योगविषय इति । सिद्धान्ते तन्निरासप्रकारश्च प्रथममुपहिते व्युत्पत्तिग्रहो निर्बाधः । पश्चाच्च लक्षणादिना शुद्धसिद्धिरिति ।

सूत्रक्रमस्तु श्रुतौ प्रथमोपात्तस्य लिङ्गस्य प्रथमसूत्रे उक्तिः । द्वितीये तदनन्तरोक्तात्मश्रुतेः । आत्मश्रुतिसामान्याच्च स आत्मेत्यात्मश्रुतेश्च तन्त्रेणाभिधानम् । आत्मश्रुतिरप्यौपचारिकीति शङ्कानिरसनेन पूर्वसूत्रोक्तार्थव्यवस्थापकत्वात् व्यवहितस्यापि तन्निष्ठस्य मोक्षोपदेशस्योक्तिः । ततश्चाप्रसिद्धशाखाविरोधशङ्कानिरासाय गतिसामान्योक्तिः । तदनन्तरं च प्रकरणान्तरस्थश्रुत्युक्तिः । गतिसामान्यस्य प्रागनुक्तश्रुत्यन्तरे चेतनकारणत्वावगमेऽपि सद्विद्यायामचेतनकारणतैव बोध्यतामिति शङ्कासंभवात् गतिसामान्योक्त्यनन्तरं श्रुतत्वाच्चेति विन्यस्तमिति ।

**अन्येतु**—अस्मिन्नधिकरणे पूर्वसूत्रसंशब्दार्थस्य वचनवृत्त्या कृत्स्नवैदिकशब्दप्रतिपाद्यत्वस्य समर्थनात् शास्त्रेण पूर्वाधिकरणेन च संगतिः । तत्र 'अशब्दमस्पर्शं' 'यतो वाचो निवर्तन्ते' इत्यादिश्रुत्या ब्रह्मणो वाच्यत्वनिषेधात् कथमुक्तलक्षणसमन्वय इति प्राप्ते—ईक्षणकर्मत्वात् ब्रह्मणो वाच्यत्वमावश्यकम् । न च गौण आत्मा जीव एवेक्षणीय इति शङ्क्यम् । निर्गुणवाच्यात्मशब्दस्य आत्मन्येवात्मानं पश्येत् इत्यत्र ईक्षणीयत्वश्रवणात् । आत्मशब्दस्य निर्गुणवाचिता च 'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च इति तत्रात्मा स नित्यः शुद्धः केवलो निर्गुणश्च । अथ योऽनीदृशः सोऽनात्मे'ति तलवकारब्राह्मणसिद्धिः । नापि गौणात्मनिष्ठस्य मोक्षोपदेशो युक्तः । 'यस्यानुवित्तः' इत्यादिश्रुत्या निर्गुणज्ञानादेव मोक्षोक्तेः । निर्गुणादन्यस्य हेयत्ववचनाच्च । पूर्णमद इत्यादिना निर्गुणस्य पूर्णस्यैवात्मनः स्वात्मनि लयप्रतिपादनाच्च । न चैतद्विपरीतार्थकं शाखान्तरं शङ्क्यम् । "सर्वे वेदा युक्तयः सप्रमाणाः ब्राह्मं ज्ञानं परमं त्वेकमेव प्रकाशयन्ते न विरोधः कुतश्चित् सर्वेषु तथे"ति पैङ्गिश्रुतावेव गतिसामान्योक्तेः । श्रुतत्वाच्च ब्रह्म नावाच्यमित्याहुः ।

तन्न युक्तम् । यतो जातिगुणादिप्रवृत्तिनिमित्तशून्यत्वात् केवल आत्मा न शब्दवाच्य इति हि ब्रह्मवादिभिरुच्यते । न गुणतोऽपि तथात्वम् त्वया तु जिज्ञास्यत्वेन प्रतिज्ञातं गुणपूर्णम् । गुणपूर्तिश्च जन्मादिसूत्रेण व्यवस्थापिता । तत्र शास्त्रं प्रमाणमुक्तम् । शिवादावतिव्याप्तिश्च चतुर्थेन निराकृता । निर्धर्मकस्यात्मनो वार्तापि न त्वया प्रस्तुता । प्रत्युत तस्याद्यसूत्र एव जिज्ञास्यत्वासंभवो वर्णित इति कथमकस्मात् सिद्धान्त्यभिमतार्थे अवाच्यत्वशङ्कया समन्वय आक्षिप्यत इति उक्तं सर्वमयुक्तम् । जिज्ञास्यस्यावाच्यत्वात्, नहि सविशेषत्वे तस्याशब्दमित्यादिश्रुतिरुपपद्यत इत्याक्षेपसंगतिरिति चेन्न । तथा सति निर्विशेषत्वनिषेध एव ब्रह्मणि व्यवस्थापनीयो न तु तदुपजीवकावाच्यत्वनिषेधः । सन्ति च साक्षी चेता केवलो निर्गुणश्च इत्यादिश्रुतयो निर्विशेषत्वबोधकतया संभाव्यमानाः । नच तत्र साक्षित्वादिविशेषसमभिव्याहारान्न निर्विशेषत्वशङ्का युक्तेति वाच्यम् । अत्रापि यत इति यच्छब्दस्य आनन्दमित्यानन्दशब्दब्रह्मशब्दादेरशब्दमित्यादौ परधृततदादिशब्दानां सत्त्वेन व्याघातसाम्यात् । तुल्यश्च निर्विशेषेऽपि विचाराक्षेपः । तत्र ज्ञाताज्ञातरूपद्वयाभावात् ।

किं च शास्त्रं जगत्कारणत्वेन किंचित्प्रतिपादयतीति पूर्वपक्षी मन्यते न वा? आद्येऽप्यशब्दमित्यादिश्रुतयः तत्परा इति मन्यते उतान्यपरा इति । तत्र नाद्यः, परस्परविरोधेन श्रुत्योरन्यतराप्रामाण्यप्रसङ्गात् । प्रवृत्तिनिमित्तसद्भावे अवाच्यत्वशङ्काया उत्थानासंभवात् । व्याहतौ बलवदनुरोधेन दुर्बलस्य नेयता च तन्त्रान्तरसिद्धा । नाद्ये द्वितीयः, कारणादन्यस्याशब्दत्वेऽपि कारणजिज्ञासासमन्वयादेराक्षेपायोगात् । न द्वितीयः । यतो वेत्यादिप्रत्यक्षश्रुतिविरोधः ॥ शास्त्रप्रामाण्यमपि पूर्वपक्षिणो नानुमतम्, किं तु कथंचित्सिद्धान्तप्रतिक्षेपमात्रम् । एवं चाशब्दश्रुत्यादरे कारणत्वानुपपत्तेः कारणताश्रुत्यादरे अशब्दत्वानुपपत्तिरिति पूर्वपक्षशरीरमिति चेन्न । तर्हीक्षणीयत्वेन न तन्निरासः ईक्षणीयत्वश्रुत्यादरेऽपि अशब्दत्वानुपपत्तितादवस्थ्यात् ईक्षणीयत्वस्य वाच्यत्वाविनाभावयुक्तिसाचिव्यात् बलवत्त्वम् । बलवता च तेन दुर्बलमन्यथानेयमित्यभिप्राय इति चेन्न । कारणत्वादेरपि तदविनाभावेन यतो वेत्यादिशास्त्रप्रमाणकेन अवश्यमुपन्यस्येन बलवता अस्योत्थानसमय एव तादृशावाच्यत्वशङ्कानिबर्हणात् क्वावाच्यत्वशङ्कया तत्प्रतिक्षेपावसरः । नहि कारणमप्यवाच्यमिति शङ्कितुं शक्यम् । एवं सत्यवाच्यत्वेन कारणत्वाक्षेपायोगात् । उक्तं हि **जयतीर्थेन** पूर्वपक्षनिरूपणावसरे-न ब्रह्मणः शास्त्रमुख्यार्थत्वमुपपद्यते । यतस्तु 'यतो वाच' इत्यादिश्रुतेः शब्दवाच्यत्वम् । न ह्यवाच्ये मुख्यार्थता संभवति । अतो न शास्त्रोक्तं कारणत्वं तस्येति भाव इति । कारणत्वस्योरीत्या वाच्यत्वाविनाभावे स्थिते शास्त्रमुख्यार्थस्यैव कारणताध्रौव्यात् ।

अथोच्येत मुख्यार्थस्यापि कारणत्वमस्तु । व्यभिचारशङ्कायामविनाभावानिर्णयात् न कारणत्वेनावाच्यत्वशङ्कानिरासः । ईक्षणीयत्वस्य वाच्यत्वव्यभिचारशङ्का न संभवति । विपक्षे हेतूच्छित्तिप्रसङ्गरूपप्रतिकूलतर्कसंभवादिति शास्त्रमुख्यार्थस्य न कारणतासंभव इति आक्षेपो निराबाध इति । तदपि न । यद्यदीक्षणीयं तत्तद्वाच्यमिति सहचारदर्शनवत् यद्यत्कारणं तत्तद्वाच्यमित्यदृष्टव्यभिचारे सहचारिनिश्चये सति ईक्षणीयत्वे वाच्यत्वाविनाभावो निर्णीयते न कारणत्व

इत्यस्यायुक्तत्वात् । ननूक्तस्तर्कसदसद्भावः । सत्यम् । विमृश्य तु नोक्तः अवाच्यताभ्युपगमे ईक्षणीयत्वोच्छेदहेत्वभावात् । व्याप्यव्यापकभावस्य अव्याप्यसिद्धेः ।

ननु औपनिषदस्य ईक्षणीयत्वं न मानान्तरेण । शब्दश्च शक्त्यभावात् न तत्प्रत्यायनक्षमः । तथाचावाच्यात्वोपगमे सामग्र्यभावपर्यवसानात् तेन तत्कार्यमीक्षणमुच्छिद्यत इत्यस्ति तर्को न तथा कारणत्वपक्ष इतिचेन्न । अवाच्यत्वस्य प्रवृत्तिनिमित्ताभावप्रयुक्ततया परैरभ्युपगमात् सति कारणत्वे अवाच्यत्वाभ्युपगमायोगेन विपक्षे कारणत्वोच्छित्तिरूपतर्कस्य तत्रापि साम्राज्यात् । नहि कारणत्वमवाच्यत्वमिति कश्चिदभ्युपैति । तस्मात्कारणतया प्रतिपन्ने ब्रह्मण्यवाच्यत्वमशक्याशङ्कम् । परमुक्तश्रुतेः गतिरेव वाच्येत्यवशिष्यते । सा च सूत्रकृता नैव सूत्रितेति । यदवश्यं सूत्रणीयं तन्न सूत्रितम् । यस्यासूत्रणेऽपि प्रकृतनिर्वाहः तत्सूत्रितमिति स्पष्टीकृतं परेण स्वस्यापूर्वमीमांसकत्वम् । एवं वाच्यमीक्षतेरिति विन्यासोपेक्षापि ते निर्बीजा ॥

यत्तु–विमृश्य पक्षप्रतिपक्षाभ्यांमर्थावधारणं निर्णय इत्युक्तेः प्रतिपक्षनिराकरणस्यापि कर्तव्यतया उक्तविन्यास इति । तदसत् । वाच्यत्वस्योपपादनेऽप्यवाच्यप्रतिक्षेपलाभात् स्वपक्षसाधनमुखेन परपक्षप्रतिक्षेपसंभवे तद्विपरीतरीत्यनुसरणस्यायुक्तत्वादिति ॥

यत्तु–ईक्षणीयो गौण आत्मेत्याशङ्क्य आत्मशब्दादिति हेतुना तन्निरसनम् । तदपि मन्दम् । अद्वैतिभिः विशिष्टज्ञानान्मोक्ष इत्यनभ्युपगमात् उक्ताशङ्काया असंगतेः । परानभिमतमपि संभवमात्रेणाशङ्क्य दूष्यत इति चेन्न । अस्मद्रीत्या पराभिमतार्थमाशङ्क्य तद्दूषणसंभवेनानभिमताशङ्कादूषणयोरयुक्तत्वात् । जीवस्य पारमार्थिकं रूपं तु अगौण आत्मा तस्य तलवकारब्राह्मणोक्तसर्वधर्मोपलक्षितत्वात् । अत एव तृतीयसूत्रमपि निर्दलप्रयोजनम् । हेयत्वावचनाच्चेत्यपि न सूत्रणीयम् । अहेयत्वाच्चेत्यनेनैव सामञ्जस्यात् ।

स्वाप्ययोऽप्ययुक्तः । सर्वेषामेव पारमेश्वररूपाणां लयासंभवात् । नहि नाशो वा रूपान्तरहानेन स्वरूपावस्थानमनभिव्यक्तिर्वा तत्र संभवति । महासरसि मत्स्यानामिव मूलरूपे रूपान्तराणामनुप्रवेश एवात्र लयो विवक्षित इति चेन्न । पूर्णमेवावशिष्यते इत्यस्य विरोधात् । न ह्यन्तर्लीनतामात्रेण मूलरूपमात्रपरिशेषो वक्तुं शक्यते । सकलकल्याणगुणार्णवानां भागवतरूपान्तराणामपि सत्त्वात् । "स आत्मन आत्मानमुद्धृत्य आत्मन्येव प्रविलापयति अथात्मैव भवति" इत्यस्य स ज्ञानी आत्मनो देहाद्यौपाधिकमात्मानमुद्धृत्य मुञ्जादिषीकामिवात्मनि परमात्मन्येव प्रविलापयित्वा आरोपितरूपशून्यं करोति । अथात्मा शुद्धब्रह्मैव भवतीति तस्यैव विवरणम् । एवं, स देवो बहुधाभूत्वा निर्गुणः पुरुषोत्तमः ॥ एकीभूय पुनः शेते निर्दोषो हरिरादिकृत्" इति स्मृतेरपि स देवो बहुधाभूत्वा अनेककार्यात्मना भूत्वा पश्चादेकीभूय तादृशकार्यशून्यः सन् पुनः शेत इत्यर्थः । पूर्णमद इत्यादेरर्थस्तु भाष्यादावेवोक्त इति न कयाचिदपि श्रुत्या स्मृत्या वा परमात्मनः पारमेश्वरेण रूपेण स्वस्मिन्लयो दर्शित इति । गतिसामान्यादिति सूत्रं तु प्रक्रान्तं वाच्यत्वसमर्थनमपरिसमाप्य न मध्ये निवेशयितुमुचितम् । श्रुतत्वादिति चेक्षणीयत्वादिना गतार्थम् ।

यत्तु—श्रुतत्वादित्यस्य गतिसामान्यस्यापि श्रुतत्वादित्यर्थकतया चरमं तन्निवेशोऽगतार्थताचेति । तन्न । गतिसामान्यादिति सूत्रे उक्तश्रुत्युदाहरणेनैव तल्लाभात् । न हि तत्र न्यायेन निर्णयो भाष्यतत्त्वप्रकाशिकादिष्वाश्रितो येनेदमर्थवत्स्यात् । अस्तुवा यथाकथंचित्सूत्रगमनिका तथापि कथमवाच्ये ईक्षणीयत्वमनुपपन्नम् ।

तथाहि—शुद्धस्य ब्रह्मणोऽवाच्यत्वं सिद्धान्तिनोच्यते नोपहितस्यापि बृंहतेर्धातोरर्थानुगमादित्याद्यसूत्रे भाष्ये ब्रह्मणि ब्रह्मशब्दव्युत्पादनात् । उपहितस्य शुद्धाभेदेन शुद्धेऽप्यौपाधिकवाच्यत्वाभ्युपगमो न विरुद्धयते । यथाहि अज्ञेयत्वमविद्यानिवर्तकज्ञानविषयस्यापि ब्रह्मणोऽङ्गीक्रियते । न चेदृशी व्यवस्था प्राचीनाचार्याननुगतेति वाच्यम् । प्रथमसूत्रे ब्रह्मणो मनोवृत्तिविषयत्वे स्वप्रकाशत्वानुपपत्तिमाशङ्क्योक्तं **भामत्याम्**—न चैतावता ब्रह्मणः पराधीनप्रकाशता । नहि शब्दज्ञानप्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवति सर्वोपाधिविहीनं हि ब्रह्म स्वप्रकाशमिति गीयते । नतूपहितमपि । यदाह स्म भगवान् भाष्यकारः—न तावदयमेकान्तेनाविषय इति । न चान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः । तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वादिति । तथाच ब्रह्मणःस्वप्रकाशता स्वाभाविकी ज्ञेयता चौपाधिकीत्यर्थपर्यवसानेन निरुपाधिकज्ञेयताशून्यत्वमेव स्वप्रकाशत्वमदृश्यत्वरूपं पर्यवसितमित्युक्तं भवति । स चायं न्यायोऽवाच्यत्वनिर्विशेषत्वादावपि तुल्यः । सर्वोपाधिविनिर्मोके सत्येव जातिगुणादिप्रवृत्तिनिमित्तशून्यतया अवाच्यत्वसंभवात् । वाच्यतायाश्चोपाधिसापेक्षायाः औपाधिकत्वात् । नचोपहितमिथ्यात्वपरतयापि भामतीग्रन्थो योजयितुं शक्य इति वाच्यम् । उपहितमात्रमिथ्यात्वस्य वाक्यान्वयाधिकरणस्थकल्पतरुग्रन्थविरोधेन वक्तुमशक्यत्वात् ।

अस्तु वा चिद्रूपहीनस्यानन्यगत्या मिथ्यात्वम् । तथापि न प्रकृतभामतीग्रन्थस्य तदभिप्रायकता युक्ता । यतोऽत्र न चायमेकान्तेनाविषय इति भाष्यं स्वोक्तार्थोपष्टम्भकतयोदाहृतम् । तत्र चायमित्यविषय आत्मा परामृष्टः । कथंपुनः प्रत्यगात्मनि अविषयेऽध्यासो विषयतद्धर्माणामिति युष्मत्प्रत्ययापेतस्य प्रत्यगात्मनोऽविषयत्वं ब्रवीमीति च अविषयात्मन एव ततः प्राक्तनभाष्ये प्रस्तुतत्वात् । यदि चेदंशब्देनोपहितस्यैव परामर्शः तदा न चायमेकान्तेनेत्यत्र एकान्तपदोपादानमनर्थकं स्यात् । किं च इह तु ब्रह्मस्वरूपस्योपाधिकलुषितस्य प्रागप्यपरोक्ष्यात् । नहि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते । जीव एव तत्तदुपाधिरहितः शुद्धबुद्धत्वादिस्वभावो ब्रह्मेति गीयते इति पाश्चात्यो भामतीग्रन्थोऽप्येवं सति विरुध्येत । प्रागुपाधिकलुषितस्यैव ब्रह्मभावोक्तेः । एतदनुसारिण एव कल्पतरुपरिमलादयो ग्रन्था दृश्यन्ते ।

उपपद्यते चायमेव पक्षः । अन्यथा कथं पुनः प्रत्यगात्मनि अविषय इत्यादि भाष्यमुपपद्यते । अविषयशब्दबोध्यस्य विषयत्वाविषयत्वाभ्यां व्याघातात् । यदि पुनः स्वप्रकाशत्वं चिदविषयत्वं वृत्तिविषयत्वेऽपि न विरुद्धमिति मतमाद्रियते तदाप्यस्मदुक्तार्थे भामत्यादिग्रन्थानुकूल्यमनपवादम् । एवमविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेन्न । अविद्याकल्पितभेदनिवृत्तिपरत्वात् शास्त्रस्य । नहि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपादयति । कथं तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपवदतीति भाष्यमप्युक्तार्थेऽनुकूलम् ।

अविषयतयोपलक्षितं प्रतिपादयति इति हि तत्रोच्यते । अन्यथा सप्रकारकत्वेनाविद्यानिवर्तकत्वानुपपत्तेः । ब्रह्मणः शास्त्रजन्यज्ञानाविषयत्वे प्रतिपादयदित्यस्यासङ्गतेश्च । उक्तभाष्यं च लक्षणया ब्रह्मबोधकं वेदान्तवाक्यं न त्वभिधयेत्यर्थपरतया आचार्यवाचस्पतिभिर्व्याख्यातम् ।

नन्वेमपि तैत्तिरीयभाष्ये महताप्रबन्धेन ब्रह्मणः शब्दवाच्यत्वं समर्थितम् । त्वदुक्तरीतौ तु तद्विरुद्धमापद्येत । तथाहि - तत्र सत्यं ज्ञानमनन्तमित्यत्र ज्ञप्तिस्वरूपं ब्रह्मणः प्रतिपाद्यत इति न युक्तम् । ज्ञानस्य धात्वर्थे कारकापेक्षत्वे चानित्यत्वपारतन्त्र्ययोरापत्तेरित्याशङ्क्य वृत्तिप्रतिबिम्बितचैतन्यात्मना साध्यतामापन्नस्य तस्य धात्वर्थत्वेऽपि स्वरूपतो नित्यत्वमनपवादमिति समाधानं चोक्तम् । तस्मादेव च (म)ज्ञानशब्दावाच्यत्वमिति । एवं सत्यशब्दावाच्यत्वमप्युपपाद्योपसंहृतम् । अतः सिद्धं 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' । 'अनिरुक्तेऽनिलयने' इति चावाच्यत्वम् । नीलोत्पलादिवदवाक्यार्थत्वं च ब्रह्मण" इति चेन्न, ज्ञानशब्देन तल्लक्ष्यते । न तूच्यते । शब्दप्रवृत्तिहेतुजात्यादिरहितत्वात् । तथा सत्यशब्देनापि सर्वविशेषप्रत्यस्तमितस्वरूपत्वादिति हेतूक्त्या सर्वोपाधिविनिर्मोके सत्येव अवाच्यतेति पर्यवसानेन अनौपाधिकवाच्यताराहित्यसिद्धावपि औपाधिकवाच्यताया अनिराकरणात् । अत एवाद्वैतसिद्धौ न चारोपितगुणाश्रयतया वाच्यता तस्य तात्पर्याविषयतया तात्पर्यविषयवाच्यत्वासिद्धेरित्युक्तम् । तात्पर्यविषयश्च सर्वोपाधिविनिर्मुक्तं ब्रह्म । न चैवं घटादेरप्यवाच्यत्वं न विरुध्येत । सोऽयमित्यादिवाक्येन तद्विषयकनिर्विकल्पकबुद्धौ जननीयायां शक्त्यपेक्षाविरहादिति वाच्यम् शक्तिमनपेक्ष्यैता दृग्बुद्धिजननेऽपि यावद्घटादिसत्वं तावत्तत्र प्रवृत्तिनिमित्तसद्भावेन वाच्यत्वात् ब्रह्मणि तत्त्वक्षात्कारोदये सति आरोपितसर्वधर्मनिवृत्त्या अपारमार्थिकधर्माधिकरणताया अन्वयाभावात् न च वाच्यत्वमुपपद्यते । न चावाच्यलक्ष्यादिशब्दैरेव वाच्यतापि शङ्कनीया । तेषामपि स्वोपधान दशायामेव वाच्यत्वापादकत्वात् । एवमुपाधिसत्त्वे परब्रह्मणो वाच्यत्वोपगमादेव परं जैमिनिर्मुख्यत्वात् इति सूत्रे परब्रह्मणि ब्रह्मशब्दस्य मुख्यतोपदर्शिता । अत एवच—

विश्वोदयस्थिलयप्रकृतित्वरूप-
मेकाकिनो यदिहलक्षणमुच्यमानम् ।
तद्ब्रह्मणो यदि विशेषणरूपमिष्टं
ब्रह्मेति लक्ष्यविषयस्य पदस्य भङ्गः ॥
लक्ष्यार्थवाचिपदमत्र हि लक्षणार्थे
वाक्ये प्रधानमितरद्गुणभूतमाहुः ।
ब्रह्मेति लक्ष्यविषयं च पदं समर्थं
भूमानमत्र वदितुं नतु मर्त्यमल्पम् ॥

इति संक्षेपशारीरकोक्तमप्युपपद्यते ।

इदं च मधुसूदनश्रीचरणैर्व्याख्यातम् - ननु स्वस्वरूपस्य कारणत्वस्य विशेषणत्वसंभवात् कस्मादुपलक्षणत्वमित्याशङ्कते—कस्मादिति। यावल्लक्ष्यस्वरूपं तद्धर्मी भूत्वा यल्लक्षयति तद्विशेषणम्। जगत्कारणत्वमपि यदि यावल्लक्ष्यभावि चेत् ब्रह्म परिच्छिन्नं स्यादिति तत्पदशक्तिर्वक्ष्यमाणा बाध्येत। तत्परिहाराय लक्षणत्वमेवास्य युक्तमिति। भूमातिरिक्तस्याल्पत्वात् न ब्रह्मशब्दमुख्यार्थता। एवं च ब्रह्मणि तदतिरिक्तसंसर्गाभ्युपगमे भूमवाचिब्रह्मपदशक्तिर्बाध्येतेत्यपि तत्रैवोक्तम्।

एवं ब्रह्मणः संसारदशायां संभावितापरिच्छिन्नत्वादिगुणयोगात् वाच्यत्वम्। अवाच्यत्वं तत्रोच्यमानमुक्तदिशा योजनीयम्। इत्थमेव द्युभ्वाद्यायतनं स्वशब्दात् शब्दादेव प्रमितः इत्यादिसूत्रतद्भाष्यभामत्यादिषु निर्विशेषस्यापि वाच्यत्वोक्तिः। उक्तव्यवस्था न सिद्धान्तविरुद्धेति युक्तमुत्पश्यामः।

एवं च निरूपाधिकवाच्यताविरहेऽपि किंचिदुपाधिं पुरस्कृत्य वाच्यस्य परब्रह्मणः कथमीक्षणीयत्वमनुपपन्नम्। सामान्यतो वाच्यत्वस्य ईक्षणीयत्वव्यापकतैव हि त्वया विवक्षिता। यथोक्तमनुव्याख्याने—वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदित इति वाक्यार्थशब्दस्य वाक्यार्थवाचकत्वेऽप्यन्यत्तद्वाचकं वाच्यम्। नह्यस्माभिः लक्षकेणैव शब्देन वाच्यत्वमाशास्यते। किंतु केनचिच्छब्देन लक्ष्यमिति तत्र जयतीर्थः। अखण्डार्थताया अन्यत्र व्यवस्थापनाच्च असंसृष्टस्वभावस्य ब्रह्मणो न वाक्यार्थत्वहानिः।

एतेन लक्ष्यादिशब्दवाच्यत्वेऽपि ब्रह्मणो नोक्तावाच्यत्वभङ्गः। नवा श्रुतहानाश्रुतकल्पनादिकमपि। न चास्ति श्रुतैकदेशहानमिति वाच्यम्। तात्पर्यानुरोधेनैकदेशहानेऽपि दूषणाभावात्। छत्रिणो यान्तीत्यादौ हि श्रुतछत्रित्वादिकमपुरस्कृत्य एकसार्थगन्तृत्वादिबोधतात्पर्यवशात् न्यायविद्भिरादृतः। अखण्डार्थविवक्षायां तु लक्ष्यादिपदानामपि लक्ष्यमेव। न च गङ्गापदलक्ष्यस्य तीरस्य अगङ्गात्ववत् लक्ष्यपदलक्ष्यस्य अलक्ष्यत्वोपपत्तिरिति वाच्यम्। घटपदलक्ष्यस्य छिद्रेतरघटत्वावच्छिन्नस्य उक्तरूपेण छत्रिपदलक्ष्यस्य छत्रिणश्च घटत्वछत्रित्वाद्यभावादर्शनेन व्यभिचारात्। सर्वोपाधिविनिर्मोके लक्ष्यत्वाभावस्यापीष्टत्वाच्च। अत एव ज्ञानादिपदानां किं लक्ष्यमिति प्रश्ने वाचकेनैव प्रतिवक्तव्यम्। प्रतिवचनेऽपि लक्षकपदोपादाने अनवस्थाप्रसङ्ग इत्यपि समाहितम्। ब्रह्मादिपदेनैव ब्रह्मत्वादेरुपलक्षणत्वविवक्षणीयप्रतिवचनोपपत्तिः।

नन्वनेकेषां शब्दानां लक्षणास्वीकारोऽनुचित इति चेन्न। न्यायप्राप्तार्थस्वीकारस्यानौचित्याभावात्। अत एव विधिवाक्यस्थयागादिप्राशस्त्ये ततोऽधिकतरार्थवादवाक्यानां लक्षणामभ्युपगच्छन्ति वाक्यविदः वाक्यार्थमात्रस्य लक्ष्यतामपि। यदाहुः—सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितमिति। त्वदभिमतान्वितशक्तिस्त्वन्यत्र निर्दलिता। जीवेशावाभासेन करोति मायाचाविद्या च स्वयमेव भवति। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। कार्योपाधिरयं

जीवः कारणोपाधिरीश्वरः । इति अनन्तश्रुतिसिद्धमायाशबलस्य ब्रह्मणोऽनेकत्ववर्णनमप्ययुक्तम् । आत्मब्रह्मादिशब्दानां पूर्णवाचित्वेऽपि मायाशबलस्य पूर्णब्रह्माभिन्नत्वेन पूर्णत्वोपपत्तेः । उपाधिविशिष्टस्यापूर्णत्वं त्वकिंचित्करम् । एवमन्यदपि परेषां वृथा प्रलपितम् । अस्माभिर्ग्रन्थविस्तरभयान्नोट्टङ्कितं उक्तन्यायैर्निर्दलितं चेति स्वयमेवोह्यं सूक्ष्मदर्शिभिरिति ॥

एवमुक्तरीत्या ब्रह्मणो वाच्यत्वे दृढे वाच्यःवश्रुतिः प्रसिद्धत्वाभिप्रायेति परोक्तमयुक्तम् । श्रुतहानाश्रुतकल्पनाबापत्तेः । यतो वाचो निवर्तन्ते इति श्रुतिश्च अस्मदुक्तार्थ एवातीव स्वरसा । यतो ग्रामं गन्तुं प्रवृत्तो हि कतिपयमध्वानं कतिचित्पदानि गत्वा वा निवृत्तो गमनान्निवृत्त इति व्यपदिश्यते । न तु सर्वथैवाप्रवृत्त इति । एवमेव वाचामप्युपहितरूपेण परमानन्दब्रह्मबोधने प्रवृत्तानां निवृत्त्यभावानौचित्यात् । एतेन "सर्वे वेदा यत्पदमामनन्ति' 'अथ कस्मादुच्यते ब्रह्मेति' 'तत्सत्यमित्याचक्षते' 'तस्मादुच्यते परं ब्रह्मेति' 'वचसां वाच्यमुत्तमं' ब्रह्मेति परमात्मेति भगवानिति शब्द्यत' इत्याद्याः श्रुतिस्मृतयोऽपि व्याख्याता इति सर्वं समञ्जसम् ।

तान्त्रिकास्तु—प्रथमसूत्रे विचारकर्तव्यतामुखेनोद्दिष्टस्य परमपुरुषस्य द्वितीयसूत्रेण लक्षणं तृतीयेन प्रमाणं चाभिहितं; चतुर्थे विचारस्याफलत्वात् अकर्तव्यत्वाशङ्का निरस्ता । संप्रत्युद्देशलक्षणप्रमाणाभिधानानन्तरं क्रमप्राप्तपरीक्षा क्रियते । तत्रादौ जगत्कारणत्वं त्रिगुणात्मकस्य प्रधानस्यैव न ब्रह्मण इत्यसंभवशङ्का निराक्रियते **ईक्षतेर्नाशब्दमिति** । तत्रेदं सदासीदितीदंशब्देन वियदाद्यवस्थापन्नस्य वस्तुन एव कारणावस्थस्य सदासीदित्यनेन बोधनात् । त्रिगुणात्मककार्यानुरूपं त्रिगुणं प्रधानमेव तदिति युक्तं न ब्रह्म निर्विकारत्वात् । एकविज्ञानेन सर्वविज्ञानमपि प्रधानपक्ष एव युक्तम् । तद्विज्ञानेन तदन्यमहदादिविशेषान्तकार्यविज्ञानोपपत्तेः । चिदचिदत्यन्तविलक्षणब्रह्मविज्ञानेन च तदन्यस्य चितोऽचितो वा विज्ञानासंभवात् । अन्यथा मृदादिदृष्टान्तवैरूप्यापत्तेरिति प्राप्ते; कारणवाक्ये ज्ञानवाचिन ईक्षतिधातोः श्रवणात् । अर्थद्वारा तस्य जडवृत्तित्वासंभवात् न प्रधानस्य जगत्कारणतेति प्रथमसूत्रेण सिद्धान्त्यते । शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वात् इदमादिशब्दः परंपरया वियदाद्यवस्थापन्नं कार्यभूतं ब्रह्म निर्दिश्य तस्य कारणावस्थायोगिनोऽग्रकालसत्त्वं प्रतिपाद्यत इति न कोऽपि दोषः । सूक्ष्मचिदचिच्छरीरकब्रह्मविज्ञानाच्च स्थूलचिदचिच्छरीरकब्रह्मविज्ञानात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाप्युपपन्ना इत्यग्रे निरूपयिष्यते । ईक्षतिश्रुतेः गौणत्वशङ्कानिरासाय च द्वितीयसूत्रम् । ईक्षतिर्गौण इति चेन्न । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा इत्यात्मशब्दात् । तत्र हि चेतनाचेतनात्मकनिखिलप्रपञ्चात्मकत्वं चेतनत्वं च सत उच्यते । न च प्रधानं जीवस्यात्मा भवितुमर्हति चेतनं वा । तेजोऽप्शब्दावपि तच्छरीरकमात्मानमेवाभिदधाते । तेज आदिशब्दानां स्वपर्यन्ततासिद्धये किलाबानुप्रवेशकीर्तनं कारणस्य । प्रधानविलक्षणत्वे हेत्वन्तरमुच्यते **तन्निष्ठेत्यादि** । तत्क्रतुन्यायेन ध्येयस्यैव प्राप्यत्वात् अचित्प्राप्तिरेव मोक्षः स्यात् । न चैतद्युक्तम् । अतो मोक्षहेतुध्यानविषयत्वात् कारणं न प्रधानम् । तत्रैव हेत्वन्तरं—**हेयत्वावचनादिति** । यदि कारणमचेतनं तर्हि तदात्मकत्वे मोक्षविरोधात्

हेयत्वेत्वेनोपदेश्यं स्यात् प्रतिज्ञाविरोधात्। अस्यार्थो निरूपितप्रायः। तत्रैव हेत्वन्तरं-**स्वाप्ययात्।** स्वशब्दस्तावदात्मवाची 'स्वोज्ञातावात्मनि स्वमि' त्यभिधानात्। आत्मनिस्वमात्मानं विलापयति इति श्रूयते न च प्रधानं चेतनस्यात्मा भवितुमर्हति। इतश्च सद्विद्या न प्रधानपरा—**गतिसामान्यात्**—आत्मा वा इदमेक एवाग्र आसीत्। स ईक्षत लोकान्नु सृजा इत्यादि सृष्टिवाक्यानां या गतिः प्रवृत्तिः तत्समानार्थत्वात् अत्रापि सर्वेश्वरः कारणमिति युक्तम्। इतश्च न प्रधानम्—**श्रुतत्वाच्च।** अस्यामुपनिषदि हि कारणे सच्छब्दवाच्ये नामरूपव्याकर्तृत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वं सत्यकामत्वं सत्यसंकल्पत्वं श्रुतम्। श्रुत्यन्तरेऽपि 'अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणः स्थितः। 'स एष सर्वभूतान्तरात्मा' 'अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादौ ब्रह्मासाधारणानि लिङ्गादीनि प्रथन्ते। तस्मान्नारायण एव जगत्कारणमिति वर्णयन्ति।

तन्न। नारायणस्य जगत्कारणतायां विवादाभावेऽपि त्वदुक्तसूत्राक्षरार्थवर्णनमसङ्गतमेव। तथाहि—यदुक्तमीक्षतेरिति ईक्षतेर्धातोः श्रवणादिति। तदयुक्तम्। भगवदीक्षणस्य त्वन्मते नित्यतया ऐक्षतेति भूतत्ववाचिप्रत्ययानुपपत्तेः। मन्मते तु स्वरूपभूतज्ञाननित्यतायांमपि मायापरिणामरूपाया वृत्तेरुत्पादविनाशशालिन्याः भगवत्यभ्युपगमात् न दोषः।

यच्चोक्तमनुप्रवेशकीर्तनं स्वपर्यन्तत्वसिद्धय इति। तदनुपपन्नम्। न ह्यनुप्रवेशमात्रेण तद्वाचकानां पदानां तदन्यवाचकता सिध्यति। शरीरान्तः प्रविष्टानामपि प्राणानां शरीरवाचकमनुष्यादिशब्दैरभिधानादर्शनेन, लिङ्गविधयानुप्रवेशस्य तद्गमकत्वायोगात्। पूर्णस्य परमात्मनोऽनुप्रवेशायोगाच्च। संबन्धमात्रस्यानुप्रवेशार्थत्वे प्रवेशपदास्वारस्यम्। अनुप्रवेशस्य तादृशस्यापि सृष्टिसमकालतया तस्य सृष्ट्युत्तरकालीनसंकल्पाधीनत्वायोगश्च, भवति च 'तत्सृष्ट्वा, तदेवानुप्राविशत्' इति श्रुत्यन्तरम्। मन्मते च परब्रह्मणः स्वरूपेणानुप्रवेशस्य सृष्टिसमकालत्वेऽपि जैवेनान्तः करणोपहितरूपेणानुप्रवेशस्य अपञ्चीकृतभूतसृष्ट्युत्तरकालीनत्वादिदमुपपद्यते। 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनानुप्रविश्येत्यत्र इमस्तिस्रो देवताः शरीरावस्थापन्ना अनेन जीवेनात्मनाऽनुप्रविश्येत्यर्थः। अतोऽत्रिवृत्कृतेषु तेज आदिषु भूतकार्यान्तः करणोपहितजीवरूपेणानुप्रवेशाभावेऽपि न क्षतिः। वस्तुतो लिङ्गशरीरस्यापञ्चीकृतभूतोत्थतया ततः प्राक्तेजआदिसृष्टिसमकालं तत्र प्रवेशासंभवेऽपि तदुत्तरं त्रिवृत्करणात्प्राक् तादृशशरीरोपहितजीवात्मनानुप्रवेशो न विरुद्धः।

एतेन कुलालादिवदनुप्रवेशं विनापि नामरूपव्याकरणसंभवेन प्रवेशाभिधानं नामरूपयोः स्वपर्यन्ततासिद्ध्यर्थमेवेति परास्तम्। जैवरूपेण नामरूपव्याकरणस्य शरीरेन्द्रियादौ तेन रूपेणानुप्रवेशं विनानुपपत्तेः। तथाच नामरूपपर्यन्तत्वात्तेज आदिपदानि ब्रह्मपराणि इति सर्वत्रेक्षणं मुख्यमेवेति निरस्तम्। तत्तेज इत्यनेन तेजोऽभिन्नं तदैक्षतेति विवक्षायां तु सर्वत्रेक्षणं मुख्यमेवेत्यत्र न नो विद्वेषः।

यच्च—परमते प्रतिज्ञाविरोधोपपादनम्। तदपि न युक्तम्। स्वमतेऽपि तदपरिहारात्। तथाहि—यतो ब्रह्मविज्ञानेऽपि न जडजीवयोर्विज्ञानम् अत्यन्तभेदात्। सूक्ष्मचिदचिच्छरीरकत्वविशिष्टतज्ज्ञानात् स्थूलचिदचिद्विशिष्टस्य ज्ञातत्वमुपपद्यते। स्थूलजडस्य सूक्ष्मजडेन स्थूलचितः सूक्ष्मचिता कार्यावस्थापन्नस्य ब्रह्मणः कारणत्वावस्थापन्नेन तेनाभेदादिति चेन्न। सर्वान्तःपातिनामवस्थानां परस्पराभेदशून्यतया उक्तब्रह्मज्ञानेऽपि तासामज्ञानात्। अवस्थानां भेदानभ्युपगमे उत्पत्तिनाशादेः यौगपद्यापत्त्या बह्वव्याकुलं स्यात्। ईदृशं चैकविज्ञानेन सर्वविज्ञानं चेतनशरीरतापन्नप्रधानविज्ञानात् चेतनाचेतनसकलविज्ञानसंभवात् प्रधाने कुतोऽसंभवि। चेतनशरीरता चावस्थान्तरापन्ने तत्र तदीयभोगावच्छेदकत्वादविरुद्धा। स्वाप्ययोऽप्यनुपपन्नः। परमात्मनीव प्रधानेऽपि स्वीयस्वभावलयेन लीनतोपपत्तेः। मन्मते—स्थूलरूपप्रहाणेन कारणात्मनावस्थानलक्षणमात्मत्वं प्रधानस्यापीत्यभिहितं प्राक्। गतिसामान्यादित्यस्योक्तव्याख्यानमनुपपन्नमिति चाग्रिमाधिकरणेन सप्रपञ्चमुपपाद्यते।

एवं श्रुतत्वाच्चेत्यस्यापि।

---

॥ श्रीरस्तु ॥

श्रीदक्षिणामूर्तये नमः।

# ॥ आनन्दमयोऽभ्यासात् ॥

अत्र ब्रह्मविदाप्नोति परमित्यादितैत्तिरीयश्रुतेः स्पष्टब्रह्मलिङ्गाया ज्ञेये ब्रह्मणि समन्वयप्रतिपादनात् शास्त्राध्यायपादसंगतयः। पूर्वाधिकरणविषयसद्विद्यायामीक्षणश्रुत्या प्रायपाठस्य बाधो युक्तः। इह त्वन्यशेषावयवप्रायपाठात् ब्रह्मशब्दमुख्यार्थस्य ब्रह्मणोऽन्यशेषत्वेनैव प्रतिपाद्यता न स्वप्राधान्येनेति प्रत्यवस्थानादनन्तरसंगतिः। तत्र प्रथमान्तानन्दमयपदोपलक्षितं तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मानन्दमयः इत्युपक्रम्याम्नातं ब्रह्मपुच्छं प्रतिष्ठा इत्यन्तं वाक्यजातं किमन्यशेषतया ब्रह्म प्रतिपादयति उत स्वप्राधान्येनेति संशयः। असन्नेव स भवति इत्यादिश्लोकस्थाभ्यस्यमानब्रह्मशब्दस्यानन्दमयविषयत्वपुच्छब्रह्मविषयत्वानिर्णयश्च तद्बीजम्। न च तस्याप्यानन्दमयविषयत्वं प्रायपाठान्निर्णीतप्रायमेवेति वाच्यम्। मनोमयपर्याये अतद्विषयस्यापि यतो वाचो निवर्तन्ते इत्यादिश्लोकस्योदाहरणेन प्रायपाठान्निगमनश्लोकस्यानन्दमयविषयत्वासिद्धेः। कथंचित्तद्विषयत्वं च न प्राधान्यनिर्वाहकम्। फलं च पूर्वपक्षे आनन्दमयावयवत्वेन ब्रह्मोपास्तिः। सिद्धान्ते च ज्ञेयब्रह्मप्रमितिः। एवमन्यत्राऽप्यूह्यम्।

तत्रानन्दमयपदोदितं सुखयहमित्युपलभ्यमानं भोक्तारं जीवं प्रति शेषत्वेनैव पुच्छं ब्रह्म प्रतिपाद्यते। न प्राधान्येन। पूर्वपूर्वपर्यायेषु पुच्छतया निर्दिष्टानां अन्यशेषत्वदर्शनात्। न च

ब्रह्मविदाप्नोति परमिति ब्रह्मज्ञानस्य फलवत्त्वश्रवणात् तस्य चात्र ब्रह्मपदेन प्रत्यभिज्ञानात् ब्रह्मणः स्वप्रधानत्वमेवोचितमिति वाच्यम्। विदेरुपास्तिपराया अपि प्रायशो दर्शनेन तत्र ब्रह्मोपासनाया एव फलसंबन्धप्रतिपादनात्। भवति च ब्रह्मपुच्छत्वेनानन्दमयोपासनाया अपि ब्रह्मोपासनात्वम्। न च परमाप्नोतीति परंब्रह्मप्राप्तेः फलत्वकीर्तनात् अन्यशेषत्वेन ब्रह्मोपासनायां च तमेव विदित्वाति-मृत्युमेति नान्यःपन्था विद्यतेऽयनाय इति श्रुतिविरोधात् तत्फलकत्वासंभवेन तत्र ज्ञानमेव विदिना विवक्षणीयमिति वाच्यम्। 'ब्रह्मविदाप्नोति परं मिति संक्षिप्य कथितस्यैवार्थस्य तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह' इति विवृतत्वेन सर्वकामावाप्तेः तत्फलत्वलाभेऽपि परब्रह्मत्वप्राप्तेः फलत्वालाभात्। सत्यत्वज्ञानत्वानन्तत्व-जगत्कारणत्वादिगुणकीर्तनं चानन्दमयपुच्छे तादृशगुणविशिष्टब्रह्मदृष्टिविधानाय। यथा छान्दोग्येहि अनन्तत्वसर्वभूतकारणत्वपरोवरीयस्त्वादिगुणविशिष्टब्रह्मदृष्टिविधानायाकाशशब्दिते ब्रह्मणि तत्कीर्तनम्। एवमन्यदप्युदाहरणं सुधीभिरूह्यम्॥

न च 'यो वेदनिहितं गुहायां परमे व्योमन्' इति ब्रह्मणो गुहानिहितत्वं प्रतिज्ञातम्। तस्य चानन्दमय एव पर्यवसानं दृश्यते, न पुच्छतया निर्दिष्टे ब्रह्मणीत्यानन्दमयस्यैवोपक्रमावगतं सर्वकामावाप्तिफलकं वेदनविषयत्वजगत्कारणत्वादि सिद्ध्यतीति तस्यैव परब्रह्मत्वे स्थिते तस्य ब्रह्मपुच्छकत्वेनोपासनीयत्वेऽपि ब्रह्मणः स्वप्राधान्यमनपवादम्। एकस्यैव पुच्छपुच्छवद्भावानुप-पत्तिरिति तु न, आनन्द [अन्न] मयादावपि स्वानतिरिक्तैरेव शिरः पक्षादिभिरुपास्यमानत्वावगमा-दिति वाच्यम्। आनन्दमयस्य विज्ञानमयादान्तरत्वे कीर्तिते तत्पुच्छत्वेन निरूपितस्य ब्रह्मणोऽपि विज्ञानमयादान्तरत्वलाभात्। 'नहि पुच्छवदत्रापि स्ति नियमो वक्तुं शक्यते'?। अग्रिमः सोऽकामयत इत्यादिरपि पुच्छब्रह्मविषय एव। तस्योपक्रमे आत्मशब्देनापि निर्देशात्सः इति पुंलिङ्गेन परामर्शो-पपत्तेः। तस्यैष एव शारीर आत्मा यःपूर्वस्य इत्यानन्दमयपर्यायेऽप्यात्मशब्देन ब्रह्मनिर्देशाच्च। तस्मान्नात्र स्वप्राधान्येन ब्रह्म प्रतिपाद्यम्। एवं ब्रह्मणः स्वप्रधानत्वे पुच्छपदमनर्थकम्। प्रतिष्ठाप-देनैवाधारतालाभात्। न च कान्तिमत् मुखं इत्यादौ स्वशब्देनैव कान्तिमत्त्वलाभेऽपि मुखे गौणं चन्द्रपदमपि प्रयुज्यते। तथा प्रकृते प्रतिष्ठापदेनाधारत्वे लब्धेऽपि तल्लम्भकः पुच्छशब्दोऽपि स्यादिति वाच्यम्। यतस्तत्र चन्द्रस्य यादृशी यावती च कान्तिस्तावती तादृशी वा सा मुखे नास्तीति मुखस्तुत्यर्थं चन्द्रपदमर्थवत्। न च कान्तिमत्पदमात्रेण तादृशार्थलाभः संभवति। तस्य मानान्तरविषयविद्यमानतावन्मात्रकान्तिविषयत्वेन चारितार्थ्यात्। अतश्चन्द्रतुल्यकान्तिमत्त्वला-भाय चन्द्रपदोपादानम्। ब्रह्मणि तु प्रतिष्ठात्वसंकोचकमानान्तराभावात्। तस्य निरपेक्षसर्व-प्रतिष्ठात्वबोधकश्रुत्यन्तराच्च निरतिशयमेवाधारत्वं प्रतिष्ठापदेन लभ्यत इति न पुच्छपदमर्थवत्। प्रत्युत पुच्छतुल्याधारत्वविवक्षायां पुच्छस्याधारत्वं भूतलास्तीर्णतृणराशौ संचरतः पुरुषान् प्रति तृणराशेरिवाधारान्तरसापेक्षं सातिशयमिति ब्रह्मणस्तथाभूतमाधारत्वं लक्षयत्पुच्छपदमनिष्टार्थकमेव स्यात्। तस्मात् पक्षिरूपेणोपासनीयमानन्दमयं प्रति परब्रह्मणः कल्पनीयं पुच्छत्वं पुच्छपदेनोच्यते।

प्रतिष्ठापदं च कल्पनानिमित्तमाधारत्वलक्षणं सारूप्यं बोधयदर्थवद्भवति । पक्षिणो हि पुच्छभागमाधारीकृत्य निषीदन्तीति पक्षिणां पुच्छं प्रतिष्ठा । अत एवैतरेयोपनिषदि श्रूयते "तस्मात्सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्तीति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुच्छ" मिति । ब्रह्मानन्दोऽप्येतस्यैवान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यनुसारेण कृत्स्नस्याप्यलौकिकानन्दशीकरजातस्य समुद्रस्थानीय इति प्रियमोदाद्यवयवयुक्तस्यानन्दमयस्य प्रतिष्ठा । अतः सारूप्यात् ब्रह्मणः पुच्छत्वकल्पना युक्ता । अन्यत्रापि च तादृशकल्पनानिमित्तं सारूप्यवर्णनं दृश्यते । यथा "तस्य भूरिति शिरः एकं हि शिरः एकमेतदक्षर"मिति । अत्र भूरित्यक्षरे प्रजापतिशिरस्त्वकल्पनानिमित्तमेकत्वं सारूप्यमुक्तम् । न च पुच्छवाक्योपात्ते ब्रह्मणि निगमनश्लोकस्य ब्रह्मशब्दभ्यासरूपतात्पर्यलिङ्गदर्शनात् तस्यैव स्वप्रधानता युक्तेति वाच्यम् । पूर्वपूर्वनिगमनश्लोकानामन्नमयादिप्रधानविषयतादर्शनेन अत्रत्यनिगमनश्लोकस्याप्यानन्दमयविषयताया युक्तत्वात् । युक्तोऽपि जीवेऽपि ब्रह्मशब्दो ब्रह्मणादिगुणयोगात् । अन्यथा प्रभादिवद्वैयर्थ्यस्योक्तत्वात् । तस्मादानन्दमयो जीव एव स्वप्राधान्येनोपास्यतया विवक्षित इति प्राप्ते, अभिधीयते ।

**आनन्दमयोऽभ्यासात्** इति । अत्रानन्दमयपदं तदुपलक्षितवाक्यविशेषपरम् । यथा प्रकरणं तु पौर्णमास्यां रूपावचनादिति सूत्रे पौर्णमासीपदं तद्घटितविद्वद्वाक्यपरम् । स्वप्रधानब्रह्मपरमिति च साध्यमध्याहार्यम् । अभ्यासरूपतात्पर्यलिङ्गस्य हेतूकरणानुरोधात् । तथा चानन्दमयशब्दोपलक्षितो वाक्यविशेषः स्वप्रधानब्रह्मपरः । असति बाधके, अभ्यासादभ्यस्यमानब्रह्मपदघटितवाक्यैकवाक्यतापन्नवाक्यत्वादिति सूत्रार्थः ।

यद्वा—आनन्दमयशब्दस्यानन्दमयशब्दार्थत्वेऽपि विशिष्टलाक्षणिकता त्वयापि वाच्या । अन्यथा प्रचुरानन्दविशिष्टस्य पक्षत्वे विकारशब्दान्नेति चेदित्याशङ्काया अनुत्थानप्रसङ्गात् आनन्दविकारस्य तथात्वे च बाधासिध्यादिप्रसङ्गात् । तथा चानन्दमयपदंतात्पर्यविषयपरं पूर्वसूत्रादनुषक्तं तत्पदं च साध्यार्पकं वाक्यस्य पदसमुदायरूपत्वात् तस्य यत्परत्वं तद्घटितपदानामपि तत्परत्वमविरुद्धमिति नात्र पक्षे बाधः । परमतेऽपि ह्यभ्यस्यमानब्रह्मशब्दघटितनिगमनश्लोकविषयत्वादित्यपि विविच्यमानमनेकपदार्थघटितत्वात् अस्मदीयहेतुतो न लघु । निगमनत्वतद्विषयत्वादीनां यथाश्रुतानामतिप्रसञ्जकत्वात् ।

वस्तुतस्तु नेतरोऽनुपपत्तेः इत्यत्र आनन्दमयपदार्थ इतरो नेत्युक्तौ बाधः । ब्रह्मादीनामपि जीवानामानन्दप्रचुरत्वात् अविद्यप्रकृतेस्तु सुतराम । तथाच तदनुरोधेनानन्दमयपदपरममुख्यार्थस्य तात्पर्यविषयस्य वा धर्मित्वेन विवक्षा परैरपि न कार्या । तथाचानन्दमयशब्दार्थस्य जीवस्यैव निगमनश्लोकविषयत्वात् ब्रह्मशब्दस्यापि जीवपरतासंभवाच्च न पुच्छं ब्रह्मानन्दमयशब्दघटितवाक्यप्रतिपाद्यमिति शङ्का च नेतरोऽनुपपत्तेः इत्यत्र निर्लोडियिष्यते । तथाच निगमनश्लोके ब्रह्मशब्दाभ्यासेन ब्रह्मणः स्वप्रधानत्वावगमात् तस्यैव च ब्रह्मपुच्छं प्रतिष्ठेत्यत्र प्रत्यभिज्ञानात् पुच्छत्वेन निरूपितस्य ब्रह्मणः स्वप्रधानतया प्रकरणप्रतिपाद्यत्वमप्रत्यूहमिति सूत्रार्थो निराबाधः ॥

ननु — पुच्छशब्दस्याभ्यमानब्रह्मशब्दानुरोधेन प्रतिष्ठापदलभ्याधारादिलक्षकत्वे आनर्थक्यापत्तिः। ततश्चानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेनाभ्यस्तब्रह्मशब्दादपि पुच्छशब्द एव बलीयानिति शङ्कामनूद्य दूषयति—**विकारशब्दान्नेति चेन्न प्राचुर्यात्।** अत्र विकारशब्दोऽवयवपरो ग्राह्यः। तथाचावयवपरपुच्छशब्दादुक्तरीत्या बलवतो हेतोः न ब्रह्म स्वप्राधान्येन प्रतिपाद्यमिति चेन्न। प्राचुर्यादवयवप्रायवचनात् पुच्छशब्दोपपत्तेरिति तदर्थः। अयं भावः—यो वेद निहितं गुहायां परमे व्योमन्निति मन्त्रे सत्यं ज्ञानमनन्तमिति प्रतिज्ञातमानन्त्यमसंकुचितं वस्तुपरिच्छेदराहित्यगर्भं सति परमार्थसतोः जीवब्रह्मणोः स्वाभाविके भेदे नोपपद्यत इति शङ्कायां तस्योपपादनाय जीवो नातिरिक्तो येन वस्तुपरिच्छेदः स्यादिति। किंतु अविद्योपाधिकं बुद्ध्युपाधिकं वा ब्रह्मैवेति दर्शयितुं ब्रह्मण एव जीवरूपेण परमव्योमशब्दितायामव्याकृतलक्षणायां तादृशहार्दाकाशलक्षणव्योम्निस्थितायां बुद्धिलक्षणायां वा गुहायां निहितत्वमुक्तम्। ततश्चोत्पत्त्यादिमतोऽशनायादियुक्तस्य कर्तुर्भोक्तुश्च जीवस्य कथं तदतीतब्रह्मस्वरूपतेति शङ्काव्युदासायोत्पत्त्यशनायादयो न जीवस्य स्वाभाविकाः। किं त्वौपाधिका एवेति प्रतिपादयितुमुत्पत्त्यादिधर्मकानन्नमयादिकोशान् दर्शयित्वा विज्ञानं यज्ञं तनुते इति विज्ञानशब्दोदितायां बुद्धावेव कर्तृता निक्षिप्ता। ततश्च अविद्याबुद्धिभ्यामुपहितमन्तःकरणोहितं वा भोक्तारं जीवमानन्दमयं निरूप्य ततोऽपि विलक्षणतदीयतात्विकरूपं विशुद्धसाक्षिणं ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्मात्मतया प्रतिपादितम्।

नन्वेवमपि न जीवस्य ब्रह्मता संभवति। अविद्योपाधिकस्य बुध्युपाधिकस्य वा उपाधिमिथ्यात्वेन मिथ्यात्वात् ब्रह्मणश्च सत्यत्वादिति शङ्कायां तन्निरासाय नोपाधिविशिष्टस्य ब्रह्मतोच्यते। किंतु ततो निष्कृष्टस्य विशेष्यांशमात्रस्येति द्योतनायानन्दमयाधारत्वेन ब्रह्मप्रतिपाद्यते। उक्ते ह्याधारे ब्रह्मणि उपहितात् जीवद्विलक्षणत्वं सिद्ध्यति।

नन्वेवमाधाराधेययोरत्यन्तविलक्षणत्वं लोके दृष्टम्। तथाचाविद्याद्युपाधिकं ब्रह्मैव जीव इत्यनुपपन्नमिति शङ्कायां यथा पक्षिणस्तदन्तर्गतमेव पुच्छमाधारः एवं जीवस्यापि तदन्तर्गतं ब्रह्मैवाधार इति समाधिसौकर्यायानन्दमयं पक्षत्वेन निरूप्य अर्थान्तरलक्षकपुच्छपदासमानाधिकरणेन ब्रह्मशब्देन तदुपन्यस्तम्॥

एवे च सदृष्टान्तमानन्दमयाधारत्वेन ब्रह्मणि वक्तव्ये आनन्दमयपर्यायस्य अन्नमयादिपर्यायसाम्याय पक्षित्वेन रूपणीयस्यानन्दमयस्य शिर आदिष्ववयवेषु उक्तेषु पुच्छे चावश्यनिर्देष्टव्ये तदुभयानुग्रहाय ब्रह्मैवात्र पुच्छशब्देन निर्दिश्यत इति।

यद्यप्येवं "पुच्छशब्दान्नेति चेन्न प्रायवचनादि"त्येव सूत्रयितुमुचितम्। तथापि विवक्षितार्थान्तरलाभाय विकारेत्याद्युक्तिः। यदि पुच्छशब्देनाधारो लक्ष्यते। तर्हिप्रतिष्ठापदवैयर्थ्यमिति शङ्कायां तन्निरासाय पुच्छसादृश्यं पुच्छशब्देन विवक्षितम्। प्रतिष्ठाशब्देन चाधारोऽपि न्नविवक्षित इति विवक्षितार्थप्राचुर्यान्न तद्वैयर्थ्यमित्यपि सूत्रेण प्रतिपादनीयम्। लभ्यते चायमर्थो-

ऽस्मात् सूत्रात् । तथाहि—विकारो विगतकार्योऽनर्थकः शब्दः । अकर्तरि च कारके संज्ञायामिति कर्मणि घञन्तः कारशब्दः कार्यवाची विगतः कारो यस्य स विकारः इति व्युत्पत्तेः तादृशात्प्रतिष्ठितशब्दादानर्थक्यप्रतिहतानामिति न्यायेन बलवतो हेतोरभ्यासो न ब्रह्मप्राधान्यहेतुरिति शङ्काभावस्य प्राचुर्याद्विवक्षितार्थप्राचुर्यादिति समाधानस्य च ततो लाभादिति । यथा पक्षिणां पुच्छंतदन्तर्गतमेवाधारः तथाऽऽनन्दमयस्यापि तदन्तर्गतं ब्रह्माधार इति प्रागुक्तशङ्कानिरासाय ब्रह्मणि पुच्छतुल्याधारताया वाच्यत्वात् ।

किं चानन्दमयस्य पक्षित्वेन रूपणीयस्य पुच्छत्वेन कस्मिंश्चिन्निर्देष्टव्ये ब्रह्मैव निर्दिष्टमिति न युक्तम्, पुच्छपदप्रयोगेऽपि तेन पुच्छसादृश्यमात्रस्य बोधनेन पुच्छत्वेन तन्निर्देशाभावात् इति शंङ्कायां तन्निराकरणीयार्थान्तरलक्षकतया स्वार्थमनभिदधानस्यापि शब्दस्य स्वार्थाभिधानफलकतादर्शनप्राचुर्यादित्यवश्यं वाच्यम् । लभ्यते चायमर्थोऽस्मात् सूत्रात् । विकारशब्दात् विकारशब्दमात्रस्यैवात्र सद्भावात् न पुच्छत्वेन तन्निर्देशलाभ इति प्रायवचनफलसिद्धिर्नेति चेन्न । प्राचुर्यादुक्तजातीयदृष्टान्तप्राचुर्यादिति । तद्यथा—"उत्तरं बर्हिषः प्रस्तरं सादयति । प्रजा वै बर्हिः । यजमानः प्रस्तरः । यजमानमेवायजमानादुत्तरं करोति । तस्माद्यजमानोऽयजमानादुत्तर इति श्रुतौ प्रस्तरसमानाधिकरणस्य यजमानशब्दस्य प्रस्तरे यज्ञनिर्वर्तकत्वादियजमानगुणमुखेन वृत्तिः तत्सिद्धिपेटिकायामुक्ता । अथापि मुख्ययजमानत्वबोधने यत्फलं यजमानादेवायजमानादित्यादिवाक्यशेषार्थोपपादनं तादर्थ्यमपि दृश्यते । यथा अग्निर्वै ब्राह्मणः इति श्रुतावग्निशब्दस्यास्यप्रभवत्वरूपाग्निगुणमुखेन ब्राह्मणे वृत्तिः तत्र समर्थिता । न तुल्यन्यायेन अग्निर्वै दीक्षितः इत्यत्रापि अग्निशब्दस्यापि दीक्षिते वृत्तिः किंचिदग्निगुणमुखेनेति सिद्ध्यति । तथापि दीक्षितेऽग्नितादात्म्यबोधनस्य यत्फलं मदन्तीभिर्मार्जयन्तीति विधिशेषस्य न ह्यग्निः शीतेन वायतीत्यर्थस्योपपादनं तादर्थ्यमपि दृश्यते । एवं "यजमानो वा आहवनीयः । यजमानं वा एतद्विकर्षन्ते । यदाहवनीयात् पशुश्रपणं हरन्ति" इत्येतदादीनि प्रचुरतराण्युदाहरणानि बोध्यानीति स्थितम् ॥

यश्चान्नमयादिपर्याये पुच्छस्याप्राधान्यं पुच्छिनश्च प्राधान्यमवगतम् आनन्दमयपर्याये परित्यक्तमिति प्रायपाठविरोधः स तावन्निगमनश्लोकस्थेन ब्रह्मश्रुत्यभ्यासेन निरस्तोऽपि हेत्वन्तरेण पुनर्निरस्यते—**तद्धेतुव्यपदेशाच्चेति** । तस्यानन्दमयपर्याये स्वप्रधानतया प्रतिपाद्यस्य हेतुत्वव्यपदेशादग्रिमसंदर्भेण हेतौ मयडित्यादिना संकुचितजगत्कर्तृत्वव्यपदेशाच्चेत्यर्थः ।

अयं भावः—यदि आनन्दमयपर्यायस्य ततः प्राचीनपर्यायावैरूप्यायानन्दमयप्राधान्यं त्वयोच्यते । तथापि पूर्वपूर्वपर्यायेभ्यो वैरूप्यमानन्दमयपर्याये दुस्त्यजमेव । यतोऽन्नमयपर्यायेषु निगमनश्लोकोत्तरं ततोऽन्यस्यैवात्मनः प्रदर्शनमेव कृतम् । न तु तदनुबन्धितया तद्गताः केचन गुणा आम्नाताः । अत्र च प्रकृतपर्यायगताः कारणत्वादयो निगमनश्लोकोत्तरमपि वर्ण्यन्त इति । मन्मते तूपक्रान्तगुहानिहितत्वपर्यवसानभूमितया ब्रह्मप्रतिपत्तयेऽन्नमयादिकोशान्तरात्मतयोपदिश्यमानात्माऽत्रापि पर्याये आनन्दमयादप्यान्तरत्वेन निर्दिष्टः । तथा च जीवेश्वरभेदप्रयुक्तायां

जडेश्वरभेदप्रयुक्तायां च वस्तुपरिच्छेदगर्भानन्त्यासंभवशङ्कायां निरस्तायामपि जगदुपादाननियन्तृभेदप्रयुक्तामाशङ्कां तैत्तिरीयभाष्योक्तामाशङ्कां निरसितुं सोऽकामयतेत्यग्रिमोक्तिरिति सर्वमनवद्यमिति केचिद्व्याचक्षते ।

वस्तुतस्तु ननु कृत्स्नेनाप्यानन्दमयवाक्येन ब्रह्मपुच्छं प्रतिष्ठेत्यन्तेनावयव्यानन्दमयः पूर्वपर्यायेष्वन्नमयादिवत् शिरः प्रभृति पुच्छान्तसकलावयवापेक्षया प्राधान्येन प्रतिपाद्यः प्रतीयते । अतः प्रथमश्रुतानेकवाक्यान्तरघटितमहावाक्यविरोधादभ्यस्तस्यापि ब्रह्मशब्दस्यानन्दमये जघन्यवृत्तिकल्पनं न युक्तमित्याशङ्कां निरस्यति—

## ॥ तद्धेतुव्यपदेशाच्च ॥

तस्य ब्रह्मणो सानन्दमयनिखिलविकारहेतुत्वव्यपदेशाच्चेत्यर्थः । अयं भावः—असन्नेव स भवति । असद्ब्रह्मेति वेदचेत् इत्युक्त्या पक्षे प्राप्तामसत्वाशङ्कां निरसितुं सोऽकामयतेत्यादिना परस्य ब्रह्मणोऽभिन्ननिमित्तोपादानतामग्रिमसंदर्भः प्रतिपादयतीत्यर्थः । तैत्तिरीयभाष्ये भगवता भाष्यकारेण प्रपञ्चितः । स एव च भगवतः परमर्षेरभिमतः पक्षः । तथाच यद्यानन्दमय एव निगमनश्लोकविषयः तदा तत्र सर्वानुभवसिद्धेऽसत्वशङ्कानुदयात् तन्निरासाय सोऽकामयतेत्यादिसंन्दर्भेण तस्य निखिलजगद्धेतुत्वोपदेशोऽसङ्गत इति । न चैवमसत्त्वशङ्कायोगाच्चेति सूत्रविन्यासः स्यादिति वाच्यम् । जीवस्यापि नित्यत्वविभुत्वादिना धर्मेणाप्रत्यक्षत्वात् तेन रूपेणासत्त्वशङ्का संभवतीति शङ्काव्युदासाय संकल्पपूर्वकजगत्स्रष्टृत्वेन हेतुना सत्त्वशङ्कानिरासोऽसङ्गत इति द्योतनार्थं यथोक्तविन्यासस्यावश्यकत्वात् । चशब्देन चाग्रिमसन्दर्भेण वक्ष्यमाणानामसत्त्वशङ्कानिरासकहेत्वन्तराणां समुच्चयः । तादृशहेतवश्च तैत्तिरीयभाष्ये स्पष्टमुपपादिताः ।

॥ असमग्रोऽयं ग्रन्थः ॥